(नेपथ्य में)

भाव, जल्दी करो, जल्दी करो। आर्य विदुर की आज्ञा से ये लोग सब ही नटों से कह रहे हैं—वाद्य-विन्यास आदि की विधि विना किसी त्रुटि के प्रारम्भ कर दी जायें। अब पराशर-पुत्र (व्यास), नारद, तुम्बरु, परशुराम आदि श्रेष्ठ मुनियों द्वारा अनुसरण किये जाते हुए, भरत-कुल के हित की कामना से स्वयं दूत कर्म स्वीकार करने वाले, महाराज दुर्योधन के स्कन्धावार (डेरे) को प्रस्थान करने वाले, देवकी के पुत्र, आदरणीय भगवान् विष्णु (कर में चक्र धारण करने वाले) के प्रवेश का समय हो गया है।

सूत्रधार—(सुनकर आनन्द से) आ··हा! अरे, जगत् की उत्पत्ति, स्थिति और संहार में समर्थ कंस शत्रु भगवान् विष्णु ने आज स्वयं इन कुरु और पाण्डव राजपुत्रों के युद्ध रूपी प्रलयाग्नि के शमन का निमित्तभूत, सन्धि कराने वाला, दूत बनकर आज इस भरत-कुल पर सम्पूर्ण राजसमूह पर अनुग्रह किया है। इसीलिये, पारिपार्श्विक, नटों के साथ मिलकर संगीत आरम्भ क्यों नहीं करते?

---

नवमो रसः' इत्यस्ति तथापि न सर्वसंमतो न स नाट्यविषयश्चेति स पृथगुक्तः। स्थायिभावाभावादस्य नाट्यविषयता न संभवतीति।

[तदत्रेति] उदात्तं हृद्यम्। **कथावस्तु** कथाप्रधानं नायकः। तस्य **गौरवादाह्लादात्**। **नेपथ्यं** रङ्गभूमिः। नेपथ्यं रङ्गभूमौ स्यान्नेपथ्यं तु प्रसाधने। इति विश्वः॥ **भावो** मान्यः। मान्यो भावेति वक्तव्यः इत्यमरः खलु शब्दो वाक्यभूषायाम्। आर्यश्चासौ विदुरश्चेति विशेषणसमासः। विदुरोऽत्र नायकः तस्याज्ञयादेशेन। **शैलूषो** नटः। **अपरिहीयमानम**परित्यज्यमानं यथा स्यादेवम् ---- प्रकाराः **प्रवर्त्यन्ताम्**। कीदृशाः। **आतोद्यविन्यासो** वीणादिवादनमादौ येषां ते तथा। चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् इत्यमरः॥ **किल** निश्चये। **तुम्बुरु**र्मुनिविशेषः वृन्दारकौ रूपमुख्यौ इत्यमरः॥ **भरतकुलं** युधिष्ठिरादिवंशः। **काम्या** इच्छा। **प्रतिपन्नदौत्यस्या**ङ्गीकृतदूतकर्मणः। **सूनोः** पुत्रस्य। सूनुः पुत्रक-

(प्रविश्य)

पारिपार्श्विकः—भवतु । आरम्भयामि । कं समयमाश्रित्य गीयताम् ।

सूत्रधारः—नन्वमुमेव तावच्चन्द्रातपनक्षत्रक्रौञ्चहंसकुलसप्तच्छदकुमुदपुण्डरीककाशकुसुमपरागधवलितगगनदिङ्मण्डलं स्वादुजलजलाशयं शरत्समयाश्रित्य प्रवर्त्यतां संगीतकम् । तथा ह्यस्यां शरदि—

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥६॥

पारिपार्श्विकः—(ससंभ्रमम्) भाव ! शान्तं पापम् । प्रतिहतममङ्गलम् ।

सूत्रधारः—(सवैलक्ष्यस्मितम्) मारिष । शरत्समयवर्णनाशंसया हंसा धार्तराष्ट्रा इति व्यपदिश्यन्ते । तत्किं शान्तं पापं प्रतिहतममङ्गलम् ।

पारिपार्श्विकः—न खलु न जाने । किंत्वमङ्गलाशंसयास्य वो वचनस्य यत्सत्यं कम्पितमिव मे हृदयम् ।

सूत्रधारः—मारिष, ननु सर्वमेवेदानीं प्रतिहतममङ्गलं स्वयं प्रतिपन्नदौत्येन सन्धिकारिणा कंसारिणा । तथाहि—

---

निष्ठयोः इति विश्वः ॥ शिविरसंनिवेशः सैन्यविन्यासः । तं प्रति प्रवेशकालश्चक्रपाणेरित्यन्वयः । अहो नु खलो भोः इत्यव्ययतसमुदायोऽत्याचर्याविष्कारे । निरोधो विनाशः । प्रभविष्णुना प्रभुणा । राजचक्रं क्षत्रियसंघः । आहवो युद्धम् । कल्पान्तानलः प्रलयाग्निः । स्वयं प्रतिपन्नदौत्येनेत्यन्वयः कंसारिः कृष्णः । पारिपार्श्विक इति । सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह । काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः इति भरतः ॥ कुशीलवो नटः ॥ भरतास्तु कुशीलवाः इत्यमरः । संगीतकमेलकम् । ऐक्यमिति यावत् । नक्षत्रशिवन्यादि । ग्रह्यः सूर्यादयः । क्रौञ्च हंकूह इति प्रसिद्धः पक्षी । सप्तच्छदः तिमन इति प्रसिद्धो वृक्षः । रक्तोत्पलं कोकनदम् । इत्यमरः । तथा हि इत्ययं शब्द उक्तविभावनार्थः । श्लेपच्छायोपशेषैश्च समुद्दिष्टं विसर्पति यत्फलोदयपर्यन्तं तद्बीजमिति कीर्तितम् । इति भरतात् ।

श्लेषेण बीजमाह—सत्पक्षा इति । धार्तराष्ट्राः हंसविशेषाः कालवशात् शरन्माहात्म्यात् मेदिनीपृष्ठे निपतन्ति । मानसं सरः परिहृत्यायान्तीत्यर्थः । अथ धार्तराष्ट्राः धृतराष्ट्रपुत्रा दुर्योधनादयो भूमौ पतन्तीत्यर्थः । कीदृशाः ।

(प्रवेश करके)

**पारिपार्श्विक**—अच्छा, आरम्भ करता हूँ। किस ऋतु के विषय में गाया जाय ?

**सूत्रधार**—इसी शरद् ऋतु के विषय में संगीत आरम्भ कर दिया जाय, जिसमें चन्द्रिका, नक्षत्र, क्रौञ्च पक्षी, हंस-समूह, सप्तपर्ण, कुमुद, पुण्डरीक और काश-पुष्प के पराग से आकाश तथा दिशा-मण्डल धवल हो रहा है और जिसमें जलाशय स्वादिष्ट जल वाले हैं। क्योंकि इस शरद् ऋतु में—

सुन्दर पङ्खों वाले, मधुर वाणी वाले, दिशाओं को अलङ्कृत करने वाले, हर्ष के कारण उद्दाम क्रीडा करने वाले हंस (धार्तराष्ट्र) समय (शरद् ऋतु) के प्रभाव से पृथ्वी-तल पर आ रहे हैं। (दूसरा संकेतित अर्थ)—उत्तम साधन वाले, मधुरभाषी, दिशाओं को वश में करने वाले, अहङ्कार के धृष्टतापूर्ण कार्य करने वाले, धृष्टराष्ट्र के पुत्र (दुर्योधन आदि) मृत्यु के वश में होने के कारण पृथ्वी पर गिर रहे हैं ॥६॥

**पारिपार्श्विक**—(घबराकर) भाव, पाप शान्त हो, अमङ्गल का नाश हो।

**सूत्रधार**—(लज्जा और मुस्कराहट के साथ) मारिष, शरद् ऋतु के वर्णन की इच्छा से हंसों को धार्तराष्ट्र कहा जा रहा है। तब 'पाप शान्त हो; अमङ्गल का नाश हो' यह क्या ?

**पारिपार्श्विक**—मैं नहीं जानता हूँ, ऐसी बात नहीं है। फिर भी, आपके इस वचन से अमङ्गल की आशङ्का से मेरा हृदय सचमुच काँप-सा गया है।

**सूत्रधार**—मारिष, अब तो स्वयं दूत-कार्य स्वीकार करके सन्धि कराने वाले कंसारि ने सारे अमङ्गल का नाश कर दिया है। इस प्रकार—

---

[सन्तः पक्षा येषां ते] **सत्पक्षाः** श्रेष्ठपक्षयुक्ताः श्रेष्ठसैन्यवन्तश्च। **मधुरगिरः** मधुरवाणीकाः। **प्रसाधिता आशा** दिशो यैस्ते तथा। **मदोद्धता आरम्भा** येषां ते। 'मदो हर्षोऽहङ्कारश्च' 'धार्तराष्ट्राः सितेतरैः' इत्यमरः। इह श्लोके प्रवर्तकरूपता प्रस्तावना। यदुक्तं तत्रैव–प्रवृत्तकालमाश्रित्य वर्णना या विधीयते। तदाश्रयस्य पात्रस्य प्रवेशेन प्रवर्तकम् ॥ इति ॥ आर्याच्छन्दः ॥६॥

तत्र पटाक्षेपेण पात्रप्रवेशस्तत्र प्रविश्येति प्रयुज्यते। **शान्तं पापमनाकाङ्क्षे**

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥७॥

(नेपथ्ये साधिक्षेपम्)

आः दुरात्मन्वृथा मङ्गलपाठक शैलूषापसद,

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥८॥

(सूत्रधारपारिपार्श्विकावाकर्णयतः)

पारिपार्श्विकः—भाव, कुत एतत् ।

सूत्रधारः—(पृष्ठतो विलोक्य) अये एष खलु वासुदेवगमनात्कुरुसंधानममृष्यमाणः पृथुललाटघटितविकटकीनाशतोरणत्रिशूलायमानभीषणभ्रुकुटिरा-

---

इति भरतः । तथा च न वक्तव्यमित्यर्थः । सवैलक्ष्यं सलज्जम् । किंचिन्न्यूनस्तु मारिषः इत्यमरः । मारिष एव मर्षणान्मार्ष इति । मार्षो मारिष इत्यपि इति शब्दभेदः । न खलु न जाने किंतु जानाम्येव । खलु शब्दो निषेधे । अलंखल्वोः प्रतिषेधे इति सूत्रम् । वो युष्माकम् । यत्सत्यमसंभाव्येऽर्थे इति भरतः । तथा च यत्सत्यम् असंभावनीयमिदमित्यर्थः ।

निर्वाणेति । निर्वाणः निस्तेजीकृतः (शान्तः) वैरमेव दहनः यैः (येषां) ते तथा । अरीणां प्रशमात् उपशमात् । विनाशादिति यावत् । रक्तेभ्यः सानुरागेभ्यः प्रसाधिता दत्ता भूः यैः ते तथा । अथ च रक्तेन रुधिरेण प्रसाधितालंकृता भूर्यैस्ते । [क्षतः अन्तं गतः विग्रहः युद्धं येषां ते । पक्षे क्षता जातव्रणा विग्रहा देहा येषां ते] विग्रहो युद्धं शरीरं वा । स्वस्था सुस्थिताः [पक्षे स्वर्गस्था] मृताश्च । विग्रहः समाराङ्गयोः इति धरणिः । सुस्थिते च मृते

शत्रुओं के शान्त हो जाने के कारण पाण्डु के पुत्र, जिनकी वैर रूपी अग्नि शान्त हो गई है, कृष्ण के साथ आनन्द करें; और भृत्यों सहित कुरु-राज के पुत्र; जिन्होंने अनुरक्त (पाण्डवों) को भूमि दे दी है तथा जिनका युद्ध समाप्त हो गया है, स्वस्थ रहें ॥ (दूसरा संकेतित अर्थ)—शत्रुओं का नाश हो जाने के कारण माधव समेत पाण्डव लोग जिनकी वैर रूपी अग्नि बुझ गई है, आनन्द करें और भृत्यों समेत कुरु-राज के पुत्र, जिन्होंने रुधिर से पृथ्वी को अलङ्कृत किया है और जिनके शरीर क्षत-विक्षत हैं, स्वर्गस्थ होवें ॥७॥

(नेपथ्य में तर्जनासहित)

ओ दुष्ट, व्यर्थ ही स्तुति करने वाले, नीच नट,

लाक्षागृह में आग, विषाक्त अन्न और सभा में प्रवेश द्वारा हमारे प्राण तथा धन पर प्रहार करके और पाण्डवों की वधू के वस्त्र तथा केशों को खींचकर भी धृतराष्ट्र के पुत्र मेरे जीवित रहते स्वस्थ रहें ॥८॥

(सूत्रधार और पारिपार्श्विक दोनों सुनते हैं)

**पारिपार्श्विक**—श्रीमान्, यह ध्वनि कहाँ से (आ रही है) ?

**सूत्रधार**—(पीछे की ओर देखकर) अरे ! भगवान् कृष्ण के जाने से (होने वाली) कुरुओं के साथ सन्धि को सहन न करता हुआ यह क्रुद्ध भीम, जिसके विशाल मस्तक-तट पर, यमराज के विशाल तोरण पर त्रिशूल के समान प्रतीत होने वाली, भयङ्कर भ्रुकुटि तनी हुई है और जिसके पीछे सहदेव आ

---

स्वस्थः इति विश्व । लेशगण्डोऽयम् । यदुक्तं तत्रैव—द्व्यर्थता यत्र वाक्यानां लेशेनापि प्रतीयते । यः शब्दभङ्गिगतो लेशगण्डः स उच्यते ॥७॥

आः शब्द आक्षेपे । शैलूषो नटः [चासौ] अपसदः अधमः [च] ।

**लाक्षागृहेति** । [लाक्षागृहे यः अनलः अग्निसमर्पणं स च विषमिश्रितमन्नं विषान्नं च सभाप्रवेशश्च तैः] जतुगृहाग्निविषलड्डुककपटद्यूतादिभिः नः अस्मान् [प्राणेषु वित्तनिचयेषु च] प्रहृत्य इत्यन्वयः । पाण्डववधूर्द्रौपदी । परिधानम् परिधानीयवस्त्रम् [आकृष्टाः पाण्डववध्वाः परिधानं च केशाश्च यैः । ते धार्तराष्ट्रा मयि जीवति स्वस्थाः सुखिनो भवन्ति किम् । नैवैतदित्यर्थः] ।

पिबन्निव नः सर्वान्दृष्टिपातेन सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभि-वर्तते । तन्न युक्तमस्य पुरतः स्थातुम् । तदित आवामन्यत्र गच्छावः ।

(इति निष्क्रान्तौ)

॥ इति प्रस्तावना ॥

(ततः प्रविशति सहदेवानुगम्यमानः क्रुद्धो भीमसेनः)

भीमसेनः—आः दुरात्मन् वृथामङ्गलपाठक शैलूषापसद । (लाक्षागृहानल-इत्यादि पुनः पठति) ।

सहदेवः—(सानुनयम्) आर्य ! मर्षय मर्षय । अनुमतमेव नो भरतपुत्रस्यास्य वचनम् । निर्वाणवैरदहना इति यथार्थमेव । सभृत्याः कुरवः क्षतजालंकृत-वसुन्धराः क्षतशरीराश्च स्वर्गस्था भवन्त्विति ब्रवीति ।

भीमसेनः—(सोपालम्भम्) न खलु न खल्वमङ्गलानि चिन्तयितुमर्हन्ति भवन्तः कौरवाणाम् । सन्धेयास्ते भ्रातरो युष्माकम् ।

सहदेवः—(सरोषम्) आर्य,

धृतराष्ट्रस्य तनयान्कृतवैरान्पदे पदे ।
राजा न चेन्निषेद्धा स्यात्कः क्षमेत तवानुजः ॥८॥

---

इहावसाने विद्धकम् । यदुक्तं तत्रैव—नाटकीयफले हेतुभूतस्याध्यक्षकीर्तनम् आफलोदयमुत्साहावसानाभ्यां हि विद्धकम् ॥८॥

अये इति निपातोऽव्यासङ्गादिनाऽनाकलितस्याकलने संभ्रमाभिधायी । अये चित्रेऽवधारणे इति भरतः । [पृथुललाटेति । पृथु विशालं यत् ललाटतटं तत्र घटिता विकटं यत्कीनाशस्य कालस्य तोरणं तत्र त्रिशूलवदाचरती भीषणा भ्रुकुटिर्यस्य] कुटिलभ्रूभागो भ्रुकुटिः । दृष्टिपातेनालोकितेन । पृथुललाटेत्याद्यस्यैव विशेषणम् । इत एवाभिवर्तत इहैव तिष्ठति । निष्क्रान्तौ सूत्रधारपारिपार्श्विकौ । प्रस्तावनेति । प्रस्तावना आमुखसंधिपर्यायः । तदुक्तं तत्रैव—सूत्रधारेण सहिताः संलापं यत्र कुर्वते । नटी विदूषको वापि पारिपार्श्विक एवदा । [चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः] । आमुखं नाम तस्यैव

रहा है, दृष्टिपात से, मानो, हम सबको पीता हुआ इधर की ओर ही आ रहा है। इसलिये इसके सामने खड़ा होना उचित नहीं हैं। इसलिये हम दोनों यहाँ से कहीं अन्यत्र चलें। (दोनों बाहर चले गये)।

## प्रस्तावना समाप्त

(तत्पश्चात् सहदेव द्वारा अनुसरण किया जाता हुआ क्रुद्ध भीम प्रवेश करता है)

**भीमसेन**—अरे दुष्ट; व्यर्थ स्तुति करने वाले, नीच नट। (लाक्षागृहानल इत्यादि श्लोक १/८ का फिर पाठ करता है)।

**सहदेव**—(अनुनय सहित) आर्य, क्षमा कीजिए, क्षमा कीजिए। इस नट का वचन हमारे अनुकूल ही है। 'शान्त हो गई है वैर रूपी अग्नि जिनकी' इत्यादि वचन सच ही है। (क्योंकि) यह कह रहा है—'सेवकों सहित कुरु लोग, जिन्होंने रुधिर से भूमि को अलङ्कृत कर दिया है और जिनके शरीर व्रणयुक्त हो गये हैं, स्वर्गस्थ होवें।'

**भीमसेन**—(उलाहना देते हुए) नहीं, नहीं। आप कौरवों का अमङ्गल नहीं सोच सकते। उनसे तो सन्धि करनी चाहिये। तुम्हारे भाई है।

**सहदेव**—(क्रोधपूर्वक) आर्य,

यदि राजा रोकने वाला न हो तो तुम्हारा कौन-सा छोटा भाई पग-पग पर शत्रुता करने वाले धृतराष्ट्र के पुत्रों को सहन करे ॥६॥

---

सैव प्रस्तावना मता ॥ इति। इयं प्रस्तावना वाक्यार्थकथोद्घातरूपा। सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा। गृहीत्वा प्रविशेत्पात्रं कथोद्घातः स उच्यते ॥ इति भरतः। **प्रविशतीति**। सर्वत्र प्रवेशे पूर्वसूचितस्यान्वयः। नासूचितस्य पात्रस्य प्रवेशः इति भरतवचनात्। **मर्षय** क्षमस्व। **भरतपुत्रस्य** नटस्य अन्यथा मरणार्थतया। **सोपालम्भं** विसंवादसहितम्। वीप्सितो न खलुशब्दोऽत्यन्तनिषेधवचनः।

**धृतराष्ट्रस्येति**। [राजा निषेद्धा न स्यात् चेत् पदे पदे कृतवैरान् धृतराष्ट्रस्य तनयान् कः तवानुजः सहेत। इत्यन्वयः] पदे पदे प्रतिस्थानमित्यर्थः

**भीमसेनः**—(सरोषम्) एवमिदम् । अत एवाहमद्यप्रभृति भिन्नो भवद्भ्यः । पश्य

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
    र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम् ।
जरासंधस्योरः स्थलमिव विरूढं पुनरपि
    क्रुधा सन्धिं भीमो विघटयति यूयं घटयत ।। १० ।।

**सहदेवः**—(सानुनयम्) आर्य एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः ।

**भीमसेनः**—किं नाम खिद्यते गुरुः । गुरुः खेदमपि जानाति । पश्य ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
    वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावसे स्थितमनुचितारम्भनिभृतं
    गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ।। ११ ।।

तत्सहदेव निवर्तस्व । एवं चातिचिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनाद्विज्ञापय राजानम् ।

**सहदेवः**—आर्य किमिति ।

**भीमसेनः**—एवं विज्ञापय ।

---

चेच्छन्दो यद्यर्थे । निषेद्धा निषेधकः । इह श्लोके यद्यपि वाक्ये गर्भितनामालंकारदोषस्तथापि रसान्तरद्योतनाय तद्वाक्यमिति न दोषकक्षामवगाहत इत्यवधेयम् ।

इह अहं भिन्नो भवद्भ्यः इत्यनेन भेदसंधिः । यदाह—भेदस्तु भिन्नता इति । प्रभृतिशब्द आरम्भपर्यायः ।

प्रवृद्धमिति । [शिशोरेव मम कुरुभिः यद्वैरं प्रवृद्धं खलु तत्र आर्यः हेतुः न भवति, न किरीटी, न युवां । जरासन्धस्य उरः स्थलमिव पुनः विरूढमपि सन्धिं भीमः क्रुधा विघटयति यूयं घटयत । इत्यन्वयः] विरूढं जातं स्मृतं च । संधिर्ना संघटनके संधानेऽपि च कथ्यते । इति विश्वः ।।१०।।

तथाभूतामिति । नृपसदसि तथाभूताम् ऋतुमतीमपि आकृष्टकेशामाकृष्टाम्बरां

**भीमसेन**—(क्रोध से) यह ऐसा ही है। इसलिये आज से हम आप लोगों से अलग हुये। देखो—

मुझ बालक का ही कौरवों के साथ जो बैर बढ़ा था, उसमें न आर्य (युधिष्ठिर) कारण हैं, न अर्जुन और न ही तुम दोनों। जरासन्ध के वक्षःस्थल के समान दृढ़ सन्धि को भीम क्रोध से फिर तोड़ रहा है, तुम लोग जोड़ लो ।।१०।।

**सहदेव**—(मनाते हुये) इस प्रकार आपके अत्यधिक क्रोध करने पर बड़े भाई कहीं दुःखी न होवें।

**भीमसेन**—क्या बड़े भाई दुःखी होते हैं? क्या बड़े भाई दुःख को जानते हैं? देखो—

राज-सभा में उस प्रकार की हुई (दुर्दशा में पड़ी हुई) पाञ्चाल की पुत्री (द्रौपदी) को, वन में व्याधों के साथ वल्कलधारियों के चिरकाल वास को और विराट के भवन में अनुचित कार्यों द्वारा छिपाये गए वास को देखकर (भी) बड़े भाई को कौरवों पर आज तक खेद नहीं हुआ। मेरे खिन्न होने पर खेद होगा ।।११।।

इसलिये, सहदेव, तुम लौट जाओ। चिरकाल से बढ़े हुए क्रोध-से उद्दीप्त, भीम की ओर से राजा से इस प्रकार कहो।

**सहदेव**—आर्य, क्या (कहूँ)?

**भीमसेन**—इस प्रकार कहो—

---

च पाञ्चालतनयां द्रौपदीम्। वन उषितमस्माभिर्वासः कृतः। तद्दृष्ट्वेत्यन्वयः। स्थितमवस्थानं कृतम्। तद्दृष्ट्वेत्यन्वयः। अनुचितारम्भाः कन्यालंकरणादिकास्तैर्निभृतं गुप्तं यथा स्यादेवम्। मयि खिन्ने सति गुरुः [खेदं भजति], अद्यापि कुरुषु खेदं न वहतीत्यन्वयः ।।११।।

[**अतिचिरेति**। अतिचिरादतिचिरं वा प्रवृद्धो यः अमर्षः तेनोद्दीपितस्य]।

**युष्मदिति**। [मया युष्मच्छासनलङ्घनार्हसि मग्नेन स्थितं नाम, स्थितिमतामनुजानां मध्ये विगर्हणा अपि प्राप्ता नाम, क्रोधोल्लासितशोणितारुणगदस्य कौरवानुच्छिन्दतः मम अद्य एकं दिवसं गुरुः न असि, अहं तव विधेयः न। इत्यन्वयः]

युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥१२॥

(इत्युद्धतं परिक्रामति)

सहदेवः—(तमेवानुगच्छन्नात्मगतम्) अये कथमार्यः पाञ्चाल्याश्चतुःशालं प्रविष्टः। भवतु तावदहमत्रैव तिष्ठामि। (इति स्थितः)।

भीमसेनः—(प्रतिनिवृत्त्यावलोक्य च) सहदेव गच्छ त्वं गुरुमनुवर्तस्व। अहमप्यायुधागारं प्रविश्यायुधसहायो भवामि।

सहदेवः—आर्य, नेदमायुधागारं पाञ्चाल्यास्याश्चतुःशालमिदम्।

भीमसेनः—(सवितर्कम्) किं नाम नेदमायुधागारं पाञ्चाल्याश्चतुःशालमिदम्। (किंचिद्विहस्य सहर्षम्) आमन्त्रयितव्या मया पाञ्चाली। (सप्रणयं सहदेवं हस्ते गृहीत्वा) वत्स, आगम्यताम्। यदार्यः कुरुभिः सन्धानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु।

(उभौ प्रवेशं नाटयतः)

सहदेव आर्य इदमासनमास्तीर्णम्। अत्रोपविश्य प्रतिपालयत्वार्यः कृष्णागमनम्।

भीमसेनः—(उपविश्य) वत्स, कृष्णागमनमित्यनेनोपोद्घातेन स्मृतम्। अथ भगवान्कृष्णः केन पणेन सन्धिं कर्तुं सुयोधनं प्रति प्रहितः।

---

अंहसि पापे। नाम प्राकाश्ये। नाम प्रकाश्यसंभाव्योपगमे कुत्सने तथा। इति विश्वः। विगर्हणा निन्दा। स्थितिमतां धैर्यवताम्। क्रोधेनोल्लासिता समुत्तोलिता शोणितेनारुणा रक्ता च गदा यस्य। उच्छिन्दतो नाशयतः। दिवसं व्याप्य। कालध्वनोरत्यन्तसंयोगे इति द्वितीया। अद्येदानीम्। इदानीमद्य इति कलापसूत्रम्। अस्मिन्नहनीत्यर्थेऽनन्वयः स्यादित्यवधेयम् ॥१२॥

इह परिकररूपः सन्धिः। यदुक्तं तत्रैव—कार्याकार्यस्य हेतूनामुक्तिः परिकरो मतः। इति। चतुःशालकं चउसार इति प्रसिद्धं गृहम्। [चतसृणां शालानां

मैं तुम्हारी आज्ञा के उल्लङ्घन के पाप में डूब गया हूँ, मैंने मर्यादा का पालन करने वाले छोटे भाइयों के भी मध्य में निन्दा प्राप्त कर ली है। आज एक दिन के लिये आप मेरे क्रोध से उठाई और रुधिर से लाल गदा वाले तथा कौरवों का नाश करने वाले के बड़े (भाई) नहीं हैं और मैं अपका आज्ञाकारी नहीं हूँ ॥१२॥

(यह कहकर अकड़ के साथ घूमता है)

**सहदेव**—(उसी के पीछे-पीछे चलते हुये, स्वगत) अरे कैसे ? आर्य पाञ्चाल की राजकुमारी (द्रौपदी) की चौसाल में चले गये। अच्छा तब तक मैं यही रहूँ। (खड़ा हो जाता है)

**भीमसेन**—(लौटकर और देखकर) सहदेव, तुम जाओ और बड़े भाई के अनुकूल आचरण करो। मैं भी आयुधागार में जाकर शस्त्रों से सज्जित होता हूँ।

**सहदेव**—आर्य, यह आयुधागार नहीं है। यह तो पाञ्चाली की चौसाल है।

**भीमसेन**—(सोचते हुये) क्या कहा ? यह शस्त्रगार नहीं है, द्रौपदी की चौसाल है। (कुछ हंसकर हर्षपूर्वक) मुझे पाञ्चाली से विदा ले लेनी चाहिये। (प्रेम से सहदेव का हाथ पकड़कर) प्रिय, आओ। कौरवों के साथ सन्धि करने की इच्छा करने वाले आर्य हमें जो पीड़ा दे रहे हैं, उसे आप भी देख लें।

(दोनों अन्दर जाते हैं)

**सहदेव**—आर्य, यह आसन बिछा है। आर्य यहाँ बैठकर कृष्णा (द्रौपदी) के आने की प्रतीक्षा करें।

**भीमसेन**—(बैठकर) वत्स, 'कृष्णागमन' इस प्रसङ्ग से याद आ गया है। भगवान् कृष्ण किस शर्त पर सन्धि करने के लिये सुयोधन के पास भेजे हैं ?

---

समाहारः चतुःशालम् । आवन्तो वा इति क्लीबत्वम् । प्रशालकमिति पाठे स्वार्थे कः । ] आगारो गृहम् । आयुधसहायोऽस्त्रद्वितीयः । आः स्वीकारे । आमन्त्रयितव्या संवदनीया । कृष्णागमनं द्रौपद्यागमनमथ च हरेरागमनम् । उपोद्घात उक्तिः । तदुक्तममरे–उपोद्घात उदाहारः इति । यद्वा प्रकृतानुकूलिनी चिन्ता उपोद्घातः । भगवानैश्वर्यादिमान् । इह श्रीकृष्णो निगूढार्थो दूतः । यदुक्तः तत्रैव—उद्देश्यकार्याबोधेन विपक्षे नायके स्वयम् । वाग्युद्धनिरत्तो यस्तु स

**सहदेवः**—आर्य पञ्चभिर्ग्रामैः ।

**भीमसेनः**—(कर्णौ पिधाय) अहह हन्त देवस्यालाशत्रोरप्ययमीदृशस्तेजोऽपकर्ष इति यत्सत्यं कम्पितमिव मे हृदयम् । (परिवर्त्य स्थित्वा) तद्वत्स न त्वया कथितं न मया श्रुतम् ।

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥१३॥

(नेपथ्ये)

समाश्वसितु समाश्वसितु भट्टिनी । [समस्ससदु समस्ससदु भट्टिणी । ]

**सहदेवः**—(नेपथ्याभिमुखमवलोक्यात्मगतम्) अये कथं याज्ञसेनी मुहुरुपचीयमानबाष्पपटलस्थगितनयना आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम्

यद्वै द्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥१४॥

(ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च)

(द्रौपदी सास्रं निश्वसिति)

**चेटी**—समाश्यसितु समाश्वसितु भट्टिनी । अपनेष्यति ते मन्यु नित्यानुबद्ध कुरुवैरः कुमारो भीमसेनः । [समस्ससदु समस्ससदु भटिणी । अवणइस्सदि दे मण्णुं णिच्चाणुबद्ध कुरुवेरो कुमालो भीमसेणो । ]

निगूढार्थ उच्यते ॥ इति । पञ्चग्रामदानादानेन तयोस्तेन वैरप्रकाशनात् । अहहेत्यद्भुते खेदे इत्यमरः । यत्सत्यं निश्चये । तदुक्तं तत्रैव—यत्सत्यमिति भावार्थम् ।

यत्तदिति । यत् अस्य भूपतेः तत् ऊर्जितम् अत्युग्रं क्षात्रं तेजः तदपि अनेन तदा द्यूतसमये अक्षैः दीव्यता नूनं हारितम् इत्यन्वयः । ऊर्जितं बलवत् । क्षात्रं क्षत्रियसंबन्धि । दीव्यताक्षैर्द्यूतेन क्रीडमानेन । दिवः कर्म च इति चकारात्तृतीया । नूनं निश्चये । तदपि तेजः हारितम् । अन्यथा कथमयं तेजोभङ्ग इति भावः ॥१३॥

नेपथ्ये । आत्मगतम् । यत्तु । श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते । इति

**सहदेव**—आर्य, पाँच ग्रामों के लिये।

**भीमसेन**—(कानों पर हाथ रखकर) ओह! देव अजातशत्रु का भी यह ऐसा तेज का क्षय (हो गया), इससे सचमुच मेरा हृदय काँप-सा रहा है। (घूमकर खड़े होकर) वत्स, (समझ लो कि) वह तुमने कहा और न मैंने सुना।

इस राजा का जो वह जगत्प्रसिद्ध प्रचण्ड क्षात्र तेज वृद्धि को प्राप्त था, निश्चय ही इसने तब पाशों से खेलते हुये उसे भी गंवा दिया ॥१३॥

(नेपथ्य में)

स्वामिनी, धैर्य रक्खो, धैर्य रक्खो।

**सहदेव**—(नेपथ्य की ओर देखकर) अरे! (यह) क्या बार-बार बढ़ रहे आँसुओं के समूह से आच्छादित नेत्रों वाली द्रौपदी आर्य के समीप ही आ रही है। तब तो बड़े कष्ट की बात हुई।

क्रुद्ध आर्य में आज जो विद्युत के जैसा तेज संचित हुआ है, उसे वर्षा के समान यह कृष्णा अवश्य ही और अधिक बढ़ा देगी ॥१४॥

(तब यथावर्णित द्रौपदी और चेटी प्रवेश करती हैं)

(द्रौपदी आँसू बहाते हुये गहरा श्वास लेती है)

**चेटी**—स्वामिनी धैर्य रक्खें, धैर्य रक्खें। सर्वदा कौरवों से बंधे बैर वाला कुमार भीमसेन आपके शोक को दूर करेगा।

---

भरतः। याज्ञसेनी द्रौपदी। [उपचीयमानः वृद्धिं गच्छन् यः बाष्पस्तस्य पटलं तेन स्थगिते नयने यस्याः सा।] अश्रुणः पूर्वावस्था बाष्पः। स्थगितं पिहितम्।

**तद्वैद्युतमिति** [क्रुद्धे आर्ये अद्य यत् वैद्युतमिव ज्योतिः संभृतम् तदियं कृष्णा प्रावृडिव नूनं संवर्धयिष्यति इत्यन्वयः]। वैद्युतं विद्युत्प्रभवम्। आर्ये भीमे। संभृतं जातम्। प्रावृड् वर्षाकालः। नूनं निश्चये ॥१४॥

अत्र मन्युर्दैन्ये क्रतौ क्रुधि। इत्यमरः। द्रौपदी। सास्रं सनयनजलम्। अत्र हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति। इत्यमरः। जयतु कुमारः। अत्र जयत्वित्यत्र यद्यपि जयतेरनभिधानादुत्वं न भवतीति रूपावतारे दृश्यते तथापि तस्य प्रायिकत्वम्। प्राकृते जयदु जयत्वित्यस्याभिधानात्। प्राकृतस्य च तद्भव-तत्समो देशीत्यनेकः प्राकृतः क्रमः। इति नियमात्। संस्कृतं क्रमवत्त्वात्।

**द्रौपदी—हञ्जे बुद्धिमतिके भवत्येतद्यदि महाराजस्य प्रतिकुलो भविष्यति।**
[हञ्जे वुद्धिमदिए होदि एवं जई महाराअस्स पडिउलो हुविस्सदि। ]
**चेटी—(विलोक्य) एष कुमारस्तिष्ठति। तदेनमुपसर्पतु भट्टिनी।**
[ऐसो कुमारो चिट्ठदि। ता णं उवसप्पदु भट्टिणी।]
**द्रौपदी—हञ्जे एवं कुर्व इति।** [हञ्जे एवं करेम्ह।] (इति परिक्रामतः)
**चेटी—(उपसृत्य) जयतु जयतु कुमारः।** जअदु जअदु कुमालो।]
**भीमसेनः—(अशृण्वन् यत्तदूर्जितम् इति पुनः पठति)**
**चेटी—(परिवृत्य) भट्टिनि परिकुपत इव कुमारः लक्ष्यते।**
[भट्टिणी परिकुविदो विअ कुमालो लक्खीआदि।]
**द्रौपदी—हञ्जे यद्येव तदवधीरणाप्येषा मामाश्वासयति। तदुपविष्टा भूत्वा शृणोमि तावन्नाथस्य व्यवसितम्।** [हञ्जे जइ एव्वं ता अवहीरणादि एसा मं आसासअदि ता एत्थ उवविट्ठा भविअ सुणोमि दाव णाहस्स ववसिदं।]

(उभे तथा कुरुतः)

**भीमसेनः—(सक्रोधम्, सहदेवमधिकृत्य) किं नाम पञ्चभिर्ग्रामैः सन्धिः।**

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिवाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥१५॥

**द्रौपदी—(सहर्षम्, जनान्तिकम्) नाथ अश्रुतपूर्वं खलु ते ईदृशं वचनम्। तत्पुनरपि तावद्भण।** [णाह अस्सुदपूव्वं क्खु दे एदिसं वअणं। ता पुणो वि दाव भणाहि। ]
**भीमसेनः—(अशृण्वन्नेव, मथ्नामि कौरवशतं इति पुनः पठति)**
**सहदेवः—आर्य किं, महाराजस्य सन्देशोऽव्युत्पन्न इव गृहीत।**

---

अन्यथा क्रमहान्यापत्तेः। किं च। जयतात् भवानीपतिः इत्यादिदर्शनाज्जयत्विति साधु। अन्यथा तुह्योस्तातङ् आशिष्यन्यतरस्याम्। इति तातङोऽप्राप्तिः। जयतीत्यत्रीकारस्याकरणादित्यत्रवेयम। अत्र व्यवसितमध्यवसायः।

**द्रौपदी**—सखी बुद्धिमतिका, यह हो सकता है, यदि वह (भीमसेन) महाराज के विरुद्ध हो जायेंगे।

**चेटी**—(देखकर) यह कुमार स्थित हैं। इसलिये स्वामिनी इनके समीप जायें।

**द्रौपदी**—सखी, ऐसा ही करते हैं। (दोनों घूमती हैं)

**चेटी**—(समीप जाकर) जय हो, कुमार की जय हो।

**भीमसेन**—(न सुनते हुये, 'जो वह वृद्धि को प्राप्त था' इत्यादि श्लोक १/१३ का पुनः पाठ करता है)।

**चेटी**—(घूमकर) स्वामिनी, कुमार क्रुद्ध से दीख रहे हैं।

**द्रौपदी**—सखी यदि ऐसा है तो यह अपमान भी मुझे सान्त्वना देने वाला है। तब बैठकर नाथ के निश्चय को सुनूंगी।

(दोनों वैसा करती हैं)

**भीमसेन**—(क्रोध से, सहदेव को लक्ष्य करके) क्या पाँच ग्रामों से सन्धि ?

क्या युद्ध में क्रोध से सौं कौरवों को नहीं मारूँगा ? क्या दुःशासन के वक्षःस्थल से रुधिर नहीं पीऊँगा ? क्या गदा से सुयोधन की जांघें नहीं तोड़ूँगा ? आप का राजा भले ही शर्त पर सन्धि करलें ॥१५॥

**द्रौपदी**—(हर्षपूर्वक एक ओर को होकर चुपके से) स्वामी, तुम्हारा ऐसा वचन पहले कभी न सुना था। इसलिए फिर से कहिये।

**भीमसेन**—(न सुनते हुये ही 'मथ्नामि कौरवशतम्' इत्यादि श्लोक १/१५ का फिर से पाठ करता है)।

**सहदेव**—आर्य, क्या आपने महाराज के सन्देश को सराहनीय-सा समझ लिया है ?

---

**मथ्नामीति**। वर्तमानसामीप्ये वर्तमानवद्वा इति भविष्यति लट्। नकारः सर्वत्र शिरश्चालने। मथ्नामि विमर्दयिष्मामि। [अत्र काक्वा न मथ्नामि इति न अपि तु मथ्नाम्येवेत्यर्थो लभ्यते। एवमन्यत्रापि]। उरस्तो वक्षःस्थलात् [उरो विदार्येत्यर्थः। ल्यब्लोपे पञ्चम्यर्थस्तसिः]। पिबामि, संचूर्णयामीत्यत्रापि भविष्यति लट्। [पणेन पञ्चग्राममूल्येन] ॥१५॥

भीमसेन—का पुनरत्र व्युत्पत्तिः ।

सहदेव—आर्य एवं गुरुणा सन्दिष्टम् ।

भीमसेन—कस्य ।

सहदेव—सुयोधनस्य ।

भीमसेन—किमति ।

सहदेव—

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
प्रयच्छ चतुरो ग्रामान्कञ्चिदेकं तु पञ्चमम् ।।१३।।

भीमसेन—ततः किम् ।

सहदेव—तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजन-जतुगृहदाहद्यूतसभाद्यपकारस्थानोद्घाटनमेवेदं मन्ये ।

भीमसेन—(साटोपम्) वत्स, एवं कृते किं कृतं भवति ।

सहदेव—आर्य, एवं कृते लोके तावत्स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं भवति कुरुराजस्यासन्धेयता च दर्शिता भवति ।

भीमसेन—सर्वमप्येतदनर्थकम् । कुरुराजस्य तावदसन्धेयता तदैव निवेदिता यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञातम् । लोकेऽपि च धार्तराष्ट्रकुलक्षयः किं लज्जाकरो भवताम् । अपि च रे मूर्ख—

युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ।।१७।।

---

इह प्रतिमुखरूपः सन्धिः । यदुक्तं तत्रैव-आनुषङ्गिककार्येण क्रियते यत्प्रकाशनम् । नष्टस्येवेह बीजस्य तद्धि प्रतिमुखं मतम् ।। व्यवसायनामा वचनसन्धिरयम् । यदाह—प्रतिज्ञाहेतुसंयुक्तं व्यवसायो वचो मतः । इति ।

जनान्तिकम्—अन्योऽन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् । इति भरतः । अश्रुतपूर्वः खलु ईदृश आलापो नाथस्य । तन्नाथ पुनःपुनस्तावद्···। अत्र खलु निश्चये वाक्यभूषायां वा । अव्युत्पन्नः [तात्त्विकार्थान्तरा सह इव । तात्त्विकमर्थमविमृश्येत्यर्थः] । पञ्चग्राममात्रम् । इह भाषणरूपो निर्वहणसन्धिः । यदुक्तं तत्रैव—सामवादादिसंपन्नं भाषणं मतम् ।

**भीमसेन**—लेकिन इसमें क्या गूढ सार है ?

**सहदेव**—आर्य, बड़े भाई ने यह सन्देश दिया हैं।

**भीमसेन**—किसे ?

**सहदेव**—सुयोधन को।

**भीमसेन**—क्या ?

**सहदेव**—

इन्द्रप्रस्थ, वृकप्रस्थ, जयन्त और वारणावत यह चार ग्राम तथा पाचवाँ कोई भी एक ग्राम दे दो ॥१६॥

**भीमसेन**—उससे क्या ?

**सहदेव**—तो इस प्रकार प्रत्येक ग्राम का नाम लेकर याचना से और पाँचवें ग्राम के नाम का कथन न करने से विषाक्त भोजन, लाक्षागृहदाह, द्यूत-सभा आदि अपकार के स्थानों का उद्घाटन ही इः समझता हूँ।

**भीमसेन**—(आवेश के साथ) वत्स, ऐसा करने पर क्या होगा ?

**सहदेव**—आर्य, ऐसा करने पर लोक में (आर्य का) अपने कुल के नाश से आशङ्कित हृदय प्रकट हो जाता है और कुरु-राज के साथ सन्धि की अयोग्यता प्रदर्शित हो जाती है।

**भीमसेन**—यह सब व्यर्थ है कुरुराज के साथ सन्धि की अयोग्यता तो तब ही बतला दी थी जब हम सब ने यहाँ से वन जाते हुये कुरुकुल के नाश की प्रतिज्ञा की थी। क्या धृतराष्ट्र के कुल का नाश भी आप लोगों के लिये संसार में लज्जा-जनक है। और, मूर्ख—

क्रोध से शत्रु के वंश का नाश तो तुम्हें संसार में लज्जित करता है, लेकिन सभा में वधू के केश खींचा जाना (तुम्हें) लज्जित नहीं करता ॥१७॥

---

[**इन्द्रप्रस्थमिति**–] विषभोजनेत्यादौ यथायोगं- कुशस्थलेत्यादिसम्बन्धः। विषभोजनादेस्तत्तत्स्थानेवृत्तत्वात्तत्तत्स्मरणम् ॥१६॥

अन्यथा मन्यन्ते प्रकारान्तरेण जानन्ति। त इति शेषः। [स्वगोत्रक्षयादाशङ्कते बिभेतीति तथा]। असन्धेयताऽसंधानविषयता। [अनर्थकमुद्दिष्टार्थासाधकम्।] निधनं विनाशः।

**युष्मानिति**। [क्रोधादस्माभिः करिष्यमाणः शत्रुकुलक्षयः युष्मान्] ह्लेपयति

द्रौपदी—(जनान्तिकम्) नाथ न लज्जन्त एते । त्वमपि तावन्मा विस्मार्षीः ।
[णाह ण लज्जन्ति एते । तुमं वि दाव मा विसुमरेहि]

भीमसेन—(सस्मरणम्) वत्स, कथं चिरयति पाञ्चाली ।

सहदेव—आर्य, क्व खलु वेला तत्रभवत्याः प्राप्तयाः । किं तु रोषावेशवशाद् आगताप्यार्येण नोपलक्षिता ।

भीमसेन—(दृष्ट्वा सादरम्) देवि, समुद्धतामर्षैरस्माभिरागतापि भवती नोपलक्षिता । अतो न मन्युं कर्तुमर्हसि ।

द्रौपदी—नाथ, उदासीनेषु युष्मासु मन्युर्न पुनः कुपितेषु ;
[णाह उदासीणेसु तुह्मेसु मण्णु ण उण कुविदेसु ।]

भीमसेन—यद्येवमपगतपरीभवमात्मानं समर्थयस्व । (हस्ते गृहीत्वा पार्श्वे समुपवेश्य मुखमवलोक्य) किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि ।

द्रौपदी—नाथ, किमुद्वेगकारणं युष्मासु सन्निहितेषु ।
[णाह किं उव्वेअकालण तुह्मेसु सण्णिहिदेसु ।]

भीमसेन—किमिति नावेदयसि । (केशानवलोक्य) अथवा किमावेदितेन

जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेषु च ।
पाञ्चालराजतनया वहते यदिमां दशाम् ॥१८॥

द्रौपदी हञ्जे बुद्धिमतिके, निवेदय तावन्नाथस्य । कोऽन्यो मम परिभवेन खिद्यते । [हञ्जे बुद्धिमदिए, णिवेदेहि दाव णासस्स । को अण्णो मह परिहवेण खिजइ ।[

चेटी—यद्देव्याज्ञापयति (भीममुपसृत्य, अञ्जलिं बद्ध्वा) कुमार, इतोऽप्यधिकमद्य मन्युकारणमासीद्देव्याः [जं देवी आणवेदी । कुमाल, इदोवि अहिअं अज्ज मण्णुकालणं आसी देवीए ।]

---

लज्जायुक्तान्करोति । दाराः पुंभूम्नि इत्यमरः । इह यद्यप्येकैव द्रौपदी बह्वर्थवाचिदारशब्देनायोग्यतया प्रतिपादयितुं न शक्यते तथापि लक्षणया तदपि शक्यत इत्यदोषः । केशाकर्षणं कर्तृ ॥१७॥

चिरयति विलम्बते । क्व खलु कियती । प्राप्ताया आगतायाः । उदासीनेषु

**द्रौपदी**—(जनान्तिक) नाथ, इन्हें लज्जा नहीं आती। तुम तो न भूलो !

**भीमसेन**—(याद करते हुये) वत्स, द्रौपदी कैसे देर कर रही है ?

**सहदेव**—आर्य, आदरणीय को आये कितना समय हो गया। किन्तु क्रोध के आवेग के कारण आर्य ने आई हुई भी नहीं देखी।

**भीमसेन**—(देखकर आदर से) देवी, बढ़े हुए क्रोध वाले हमने आप आई हुई भी नहीं देखीं। इससे कुपित न होवें।

**द्रौपदी**—नाथ, आपके उदासीन होने पर (हमें) दुःख होता है, कुपित होने पर नहीं।

**भीमसेन**—यदि ऐसा है तो अपने अपमान को समाप्त ही समझो। (हाथ पकड़ कर पास में बैठाकर, मुख देखकर) लेकिन मैं आपको परेशान-सी क्यों देख रहा हूँ।

**द्रौपदी**—नाथ, आपके होते उद्वेग का कारण कैसे हो सकता है ?

**भीमसेन**—बतलाती क्यों नहीं ? (केशों को देखकर) या बतलाने से क्या ?

जब पाण्डु-पुत्रों के जीवित रहते हुये और दूर परदेश न जाने पर भी पाञ्चाल की राजकुमारी इस अवस्था को धारण कर रही है ॥१८॥

**द्रौपदी**—सखी बुद्धिमतिका, नाथ को बतला दो। अन्य कौन मेरे अपमान पर दुःखी होगा।

**चेटी**—जैसी देवी की आज्ञा हो। (भीम के समीप जाकर और हाथ जोड़कर) कुमार, आज देवी के कोप का कारण इससे भी अधिक था।

---

[ममापकारमुपेक्षमाणेषु। अपगतः वैरनिर्यातनेनेति शेषः परिभवोऽवमानता केशकर्षणादिरूपा यस्य।] समर्थयस्व जानीहि।

**जीवत्स्विति**। [यत् यस्मात्कारणात् इमां दशां वहते तस्मात् किमावेदितेन इति सम्बन्धः।] यस्य च भावेन भावलक्षणम् इति सप्तमी। दूरमिति क्रिया-विशेषणमतिशयार्थम्। अप्रोषितेष्वपरदेशवासिषु सन्निहितेष्वित्यर्थः।] ॥१८॥

कथय नाथस्य सर्वं व्यवसितम्। इतोप्यधिकतरमद्योद्वेगकारणं समासादितं देव्या।

**भीमसेन**—किं नामास्मादप्यधिकतरम् । तत्कथय कथय ।

कौरव्यवंशदावेऽस्मिन्क एष शलभायते ।
मुक्तवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव ॥१९॥

**चेटी**—शृणोतु कुमारः । अद्य खलु देवी अम्बासहिता सुभद्राप्रमुखेन सपत्नीवर्गेण परिवृताऽर्याया गान्धार्याः पादवन्दनं कर्तुं गतासीत् । [सुणादु कुमालो । अज्ज क्खु देवी अम्बासहिदा सुभद्दाप्पमुहेण सवत्तिवग्गेण परिवुदा अज्जाए गन्धालोए पादवन्दणं करदुं गदा आसी ।

**भीमसेन**—युक्तमेतत् । वन्द्याः खलु गुरवः । ततस्ततः ।

**चेटी**—ततः प्रतिनिवर्तमाना भानुमत्या दृष्टा ।
[तदो पडिणिवुत्तमाणा भाणुमदीए दिट्ठा ।]

**भीमसेन**—(सक्रोधम्) आः शत्रोर्भार्यया दृष्टा । हन्त स्थानं क्रोधस्य देव्याः । ततस्ततः ।

**चेटी**—ततस्तया देवीं प्रेक्ष्य सखीवदनदत्तदृष्टया सगर्वमीषद् विहस्य भणितम् । [तदो ताए देवीं पेक्खिअ सहीवअणदिण्णदिट्ठिए समव्वं ईसि विहसिअ भणिदं ।]

**भीमसेन**—न केवलं दृष्टा उक्ता च । अहो किं कुर्मः । ततस्ततः ।

**चेटी**—अयि याज्ञसेनि, पञ्चग्रामाः प्रार्थ्यन्त इति श्रूयते । तत्कस्मादिदानीमपि ते केशा न संयम्यन्ते । [अई जण्णसेणि, पञ्च गामा पत्थीअन्ति त्ति सुणीअदि । ता कीस दाणीं वि दे केसा ण संजमीअन्ति ।]

**भीमसेन**—सहदेव, श्रुतम् ।

**सहदेव**—आर्य, किमिहोच्यते । दुर्योधनकलत्रं हि सा । पश्य ।

---

कौरव्येति । [कः एषः मुक्तवेणीम् एनां कृष्णां कृष्णां धूमशिखामिव स्पृशन् अस्मिन् कौरव्यवंशदाहे शलभायते । इत्यन्वयः ।] अत्र यद्यपि तद्राजस्य बहुषु तेनैवास्त्रियाम् इति ण्यलो लुक्प्रसङ्गस्तथापि दुर्योधन एकस्मिन्नेव कुर्वादिभ्यो ण्यः इति कौरव्यशब्दं व्युत्पाद्य तत्र साधुः इति सूत्रेण तस्माद्यत्प्रत्ययः । एवं कौरव्याः पशवः इत्यादावप्यूह्यम् । वने च वनवह्नौ च दवो दावः प्रकीर्तितः ।

**भीमसेन**—इससे भी अधिक क्या हो सकता है ? बताओ, बताओ तो।

धूम-शिखा के समान खुली चोटी वाली इस कृष्णा को छूकर यह कौन इस कौरव-कुल की वनाग्नि में शलभ [पतंगा] बन रहा है ॥१९॥

**चेटी**—कुमार सुनिये। आज सुभद्रा आदि सपत्नी-समुदाय से घिरी हुई देवी अम्बा सहित आर्या गान्धारी की चरण-वंदना करने के लिये गई थी।

**भीमसेन**—यह उचित था। बड़े जनो की वन्दना करनी ही चाहिये। उसके बाद—

**चेटी**—वहाँ से लौटती हुई को भानुमती ने देख लिया।

**भीमसेन**—(क्रोध से) ओह ! शत्रु की पत्नी ने देख लिया। आह ! देवी का क्रोध उचित ही था। उसके बाद—

**चेटी**—तब देवी को देखकर सखी के मुख पर दृष्टि डालते हुये उसने गर्व के साथ कुछ हंसकर कहा।

**भीमसेन**—केवल देखा ही नहीं, कहा भी। आह क्या करें ? उसके बाद—

**चेटी**—अरी याज्ञसेनी, सुना है कि पाँच गाँव माँगे हैं। तब अब भी तुम्हारे केश क्यों नहीं बन्ध रहे हैं ?

**भीमसेन**—सहदेव, सुन लिया ?

**सहदेव**—आर्य, इस विषय में क्या कहा जाय ? क्योंकि वह तो दुर्योधन की स्त्री है। देखिये—

---

इति शाश्वतः। बद्धवेणीमित्यत्र भूतार्थक्तप्रत्ययस्यासाधुत्वमग्रे वेणीबन्धनादित्यदेश्यम्। वेण्यास्तदाबद्धत्वादग्र उन्मोकस्य कथनात्। अत एव वेण्याः संहार उन्मोकोऽत्रेति ग्रन्थनामपि घटते। शलभायते पतङ्गवदाचरित। वेणी केशवेषः प्रवाहश्च। एनाम् इत्यत्रानन्वादेशाद् एताम् इति युक्तः पाठः। तयोरनित्यत्वात् कृष्णां द्रौपदी श्यामां च ॥१९॥

अत्र खलु वाक्याभूप्रायाम्। अम्बा माता कुन्ती। आ इत्याक्षेपे। न संयम्यन्ते संयमनमिह बन्धम्। कलत्रशब्दस्याजहल्लिङ्गतया कलत्रं सेति सामानाधिकरण्यम्। कलत्रं श्रोणिभार्ययोः इति विश्वः।

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ।
मधुरापि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ॥२०॥

**भीमसेन**—बुद्धिमतिके, ततो देव्या किमभिहितम् ।

**चेटी**—कुमार, यदि परिजनहीना भवेत्तदा देवी भणति ।

[कुमाल, जई परिजणहीणा भवे तदो देवी भणदि ।]

**भीमसेन**—किं पुनरभिहितं भवत्या ।

**चेटी**—मया एवं भणितम् । अयि भानुमति, युष्माकममुक्तेषु केशेषु कथमस्माकं देव्याः केशाः संयम्यन्त इति । [मए एव्वं भणिदं । अइ भाणुमदि, तुह्माणं अमुक्केसु केसेसु कधं अह्माणं देवीए केसा संजमीअन्ति त्ति ।]

**भीमसेन**—(परितोषम्) साधु, बुद्धिमतिके, साधु । तदभिहितं यदस्मत्परिजनोचितम् । (स्वाभरणानि बुद्धिमतिकायै प्रयच्छति) अत्रभवति पाञ्चालराजतनये श्रूयताम् । अचिरेणैव कालेन ।

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥२१॥

**द्रौपदी**—किं नाथ दुष्करं त्वया परिकुपितेन । अनुगृह्णन्तु एवं व्यवसितं ते भ्रातरः । [किं णाह दुक्करं तुए परिकुविदेण अणुगेह्णन्तु एदं ववसिदं दे भादरो ।]

---

स्त्रीणामिति । [स्त्रीणां चेतांसि भर्तुः] साहचर्यान्नित्यसमाजात् [सहवासात् भर्तृसदृशानि भवन्ति ।] मधुरा कोमला मधुररसा वा । [वल्ली विषविटपिनं समाश्रिता मूर्च्छयते हि ।] मूर्च्छयते मूर्च्छां करोति । यद्वा मूर्च्छयते जनमिति शेषः । विषविटपो विषशाखाविस्तारः । विस्तारो विटपोऽस्त्रियाम् इत्यमरः । क्वचित् विषविटपिसमाश्रिता इति पाठः । स तु मनोहरः । वल्लर्या वृक्षसाहचर्यात् । वल्ली लता । आर्याच्छन्दः ॥२०॥

सहवास के कारण स्त्रियों के चित्त भी पतियों के जैसे हो जाते हैं। विशैले वृक्ष पर आश्रित लता मीठी होते हुये भी मूर्छा उत्पन्न कर देती है ॥२०॥]

**भीमसेन**—बुद्धिमतिका तब देवी ने कहा ?

**चेटी**—कुमार यदि देवी सेवकों से शून्य होती तब कहतीं।

**भीमसेन**—तो फिर आपने क्या कहा ?

**चेटी**—मैंने यह कहा—'अरी भानुमती, तुम्हारे केश जब तक नहीं खुल जाते, तब तक हमारी स्वामिनी के केश कैसे बंधे ?

**भीमसेन**—(सन्तोष से) ठीक, बुद्धिमतिका, ठीक। तुमने वही कहा जो हमारे सेवक के लिए उचित था। (अपने आभूषण बुद्धिमतिका को देता है) आदरणीय पाञ्चाल की राजकुमारी, सुनिए। अल्प ही समय में—

हे देवी, फड़कती हुई भुजाओं से घुमाई गई गदा के प्रहार से चूर-चूर हुई दोनों जङ्घाओं वाले सुयोधन के चिकने, चिपके हुए और गाढ़े रुधिर से लाल हाथों वाला भीम तेरे केशों को अलङ्कृत करेगा ॥२१॥

**द्रौपदी**—नाथ कुपित हुए आपके लिये क्या करना कठिन है ? आपके भाई आपके इस निश्चय का समर्थन करें।

---

केशहस्ताः संयम्यन्त इति। अत्र केशहस्ताः प्रशस्तकेशाः। साधुबुद्धिमतिके साधु इत्यनेन हर्षरूपशिल्पकमुक्तम्। यदुक्तं तत्रैव—चित्तप्रसादो हर्षः स्यात्तन्निमित्तस्य सङ्गमे इति।

**चञ्चदित्यादि**। हे देवि, तव कचान्केशान्भीम उत्तम्भयिष्यति बन्धयिष्यति। कीदृशः सन्। [चञ्चन्तौ परिस्फुरन्तौ यौ भुजौ ताभ्यां भ्रमिता या चण्डा गदा तस्या अभिघातेन प्रहारेण संचूर्णितं ऊरुयुगलं यस्य तस्य] सुयोधनस्य स्त्यानं स्तमितमपविद्धं क्षिप्तं (अवनद्धं संसक्तं) घनं निरन्तरं यच्छोणितं तेन शोणो लोहितः पाणिर्यस्य स तथा। स्त्यानं स्तिमितसङ्घयोः इति विश्वः। आविद्धक्षिप्तेरिताः समाः इत्यमरः। चण्डः प्रचण्डः ॥२१॥

इह स्त्यानेत्यादिकः प्रतीकाररूपो गण्डः। यदुक्तं तत्रैव—प्रतिक्रियान्वितं वाक्यं प्रतीकार इति स्मृतः। इह परिन्यासरूपो मुखसंधिः यदुक्तं तत्रैव—परिन्यासस्तु कार्यस्य भाविनो निश्चयाद्वचः। नाथ अतिदुष्करं त्वया परिकुपितेन

सहदेवः—अनुगृहीतमेतदस्माभिः ।

(नेपथ्ये महान्कलकलः । सर्वे सविस्मयमाकर्णयन्ति)

भीमसेनः—

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताड्यतेऽयम् ॥२२॥

(प्रविश्य संभ्रान्तः)

कञ्चुकी—कुमार, एष खलु भगवान्वासुदेवः ।

(सर्वे कृताञ्जलयः समुत्तिष्ठन्ति)

भीमसेनः—(ससंभ्रमम्) क्वासौ भगवान् ।

कञ्चुकी—पाण्डवपक्षपातामर्षितेन सुयोधनेन संयन्तुमारब्धः ।

(सर्वे संभ्रमं नाटयन्ति)

भीमसेनः—किं संयतः ।

कञ्चुकी—नहि नहि, संयन्तुमारब्धः ।

भीमसेनः—किं कृतं देवेन ।

---

व्यवसितम् । तदनुमन्यन्तामेतद्व्यवसितं देवताः । कलकलोऽकस्मादुत्थितो महाशब्दः ।

मन्थेत्यादि । [अयं दुन्दुभिः केन ताड्यते ? कीदृशः ? ] मन्थो मन्थनदण्डस्तेनायस्तः क्षिप्तो योऽर्णवः समुद्रस्तदम्भसा प्लुतं यत्कुहरं मध्यं तेन चलन् [मन्थेन मन्थनदण्डेन मन्थनेन वा आयस्तं व्याक्षिप्तं यदर्णवाम्भः तस्य प्लुतेनोत्पतनेन यत्कुहरं तत्र चलन् । अम्भसा प्लुतानि व्याप्तानि कुहराणि यस्य स चासौ चलन् इति वा] यो मन्दरनामा शैलस्तस्य ध्वान इव धीरः तच्छब्दवद्गम्भीरः अयं दुन्दुभिः केन ताड्यते इत्यन्वयः । कोणाघातेषु [शब्दविशेषेषु] सत्सु ॥ ढक्काशतसहस्राणि भेरीशतशतानि च । एकदा यत्र हन्यन्ते कोणाघातः स उच्यते ॥ इति भरतः । [यद्वा कोणो वादनदण्डस्तदाघातेषु ताडनेषु सत्सु

**सहदेव**—हम इसका समर्थन करते हैं।

(नेपथ्य में तीव्र कलकल ध्वनि होती है। सब आश्चर्य से सुनते हैं)

मन्थन से क्षुब्ध समुद्र के जल से भरी हुई गुफा वाले और घूमते हुए मन्दराचल की ध्वनि के समान गम्भीर, वादन-दण्ड का प्रहार होने पर गरजती हुई प्रलयंकारी घन-घटाओं की परस्पर टक्कर के समान, भयङ्कर कृष्णा के क्रोध के सूचक, कुरु-वंश के नाश के अपशकुनभूत प्रचण्ड पवन (के समान) और हमारे सिंहनाद की प्रतिध्वनि के मित्र इस नगाड़े को कौन पीट रहा है ॥२२॥

(प्रवेश करके घबराया हुआ)

**कञ्चुकी**—कुमार, इन भगवान् वासुदेव को···

(सब हाथ जोड़कर खड़े हो जाते हैं)

**भीमसेन**—(घबराहट के साथ) कहाँ हे भगवान्

**कञ्चुकी**—पाण्डवों के प्रति प्रेमभाव को न सहन करने वाले सुयोधन ने बाँधने का प्रयत्न किया।

(सब घबरा जाते हैं)

**भीमसेन**—क्या बाँध लिया।

**कञ्चुकी**—नहीं, बाधने का प्रयत्न किया।

**भीमसेन**—भगवान् ने क्या किया ?

---

गर्जन्त्यः प्रलयघनानां घटाः पङ्क्तयस्तासामन्योन्यसङ्घट्टस्तद्वच्चण्डः। घटा समूहः सङ्घट्टो मिलनम्। [कृष्णायाः क्रोधस्तस्य] अग्रदूतः प्रथमकथकः। कुरु-कुलस्य निधनं नाशस्तस्य) उत्पातनिर्घातवातोऽशुभः प्रचण्डपवनः। [अस्माकं] प्रतिरसितं प्रतिरवः [तस्य सखा तत्सदृशः]। [अत्र वीजगुणाख्यानात् विलोभनं नाम मुखसन्ध-ङ्गमुक्तम् इति केचित्।] ॥२२॥

कञ्चुकी महल्लकः। तल्लक्षणम्-अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥ वसुदेवस्य अपत्यं पुमान् वासुदेवः। ऋष्यन्धकवृष्णिकुरुभ्यश्च इति अण्। संयतो बद्धः। बद्धे कीलितसंयतौ इह समयरूपो निर्वहणसन्धिः। यदाह—विरोधस्य श्यानं यद्वा दुःखस्य समयो मतः। सावेगं सस्नेहम्। हन्त हर्षे। [दर्शितं यद्विश्वरूपं तस्य तेजः तस्य संपातन

कञ्चुकी—ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्च्छितमवधूय कुरुकुलमस्मच्छिविरसन्निवेशमनुप्रासः । कुमारमविलम्बितं द्रष्टुमिच्छति ।

भीमसेनः—(सोपहासम्) किं नाम दुरात्मा सुयोधनो भगवन्तं संयन्तुमिच्छति । (आकाशे दत्तदृष्टिः) आः दुरात्मन्कुरुकुलपांसुल, एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम् ।

सहदेवः—आर्य, किमसौ दुरात्मा सुयोधनो हतको वासुदेवमपि भगवन्तं स्वेन रूपेण न जानाति ।

भीमसेनः—वत्स, मूढः, खल्वयं दुरात्मा कथं जानातु पश्य—

आत्मारामा विहितमतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥२३॥

आर्य जयन्धर, किमिदानीमध्यवस्यति गुरुः ।

---

मूर्च्छितं] विश्वरूपं विश्वंभरमूर्तिः । संपातो मेलकम् । हतको निन्द्यः । पांशुल पापकारिन् । मूढो मूर्खः । खलु वाक्यभूषायां निश्चये वा ।

आत्मेत्यादि । सत्त्वनिष्ठाः सात्त्विकभावापन्ना मुनयः यं भगवन्तं वीक्षन्ते साक्षात्कुर्वन्ति । कीदृशाः आत्मारामाः आत्मैवारामो वनं येषां ते । तथा चात्मवनयोस्तुल्यत्वेनात्यन्तमौदास्यमाविष्कृतम् । यद्वा । आत्मन्यासमन्ताद्भावेन रमन्तः इत्यात्मारामाः । त्यक्तेतरसङ्गा इत्यर्थः । पुनः कीदृशाः । निर्विकल्पे निष्कलुषे निर्णीते त्यक्तभेदे वा [असंप्रज्ञातलक्षणे] समाधौ नियमविशेषे [विहितमतयः समाहितचित्ताः ।] विहितरतयः कृतानुरागाः । विहितधृतयः इत्यपि पाठः । तत्र विहिता धृतिर्धारणा यैस्ते । इदं त्वत्यन्ताभ्यासवैराग्याभ्यां भवति । तथा च गीता—असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ इति ॥ यद्वा आत्मारामे आत्मनीवारामेऽप्यासमन्ताद्विहितरतयः कृतानुरागाः । यद्वा । आत्मैवारामो वनं तत्रासमन्ताद्भावेन विहितरयः । अस्मिन्नर्थद्वये निर्विकल्पे समाधौ सति यं वीक्षन्त इत्यर्थः । पुनः

**कञ्चुकी**—तत्पश्चात् वह महात्मा प्रकट किये विश्व-रूप के तेज के प्रहार से मूर्च्छित हुए कुरु-कुल को तिरस्कृत करके हमारी छावनी में आ गये हैं और अविलम्ब कुमार को देखना चाहते हैं।

**भीमसेन**—(उपहास के साथ) क्या दुष्ट दुर्योधन भगवान् को बाँधना चाहता है ? (आकाश की ओर दृष्टि लगाकर) आह ! दुष्ट, कुरु-कुल को कलङ्कित करने वाले, तेरे इस प्रकार मर्यादा का उल्लङ्घन करने वाला होने पर पाण्डवों का क्रोध तो केवल निमित्तमात्र ही रह जायेगा।

**सहदेव**—आर्य क्या यह दुष्ट सुयोधन भगवान् वासुदेव का भी सत्य स्वरूप नहीं जानता ?

**भीमसेन**—वत्स, यह दुष्ट तो मूर्ख है, फिर भला क्या जाने ? देखो—

जिस प्रकाश और अन्धकार (ज्ञान-अज्ञान) से परवर्ती अनिर्वचनीय पुरातन देव को आत्मा में रमण करने वाले, निर्विकल्पक समाधि में चित्त को लगाये हुए ज्ञान के उद्रेक से नष्ट हुई अज्ञान-ग्रन्थि वाले ब्रह्मनिष्ठ योगी देखते हैं, उस (देव) को मोह से अन्धा यह (दुर्योधन) कैसे देख सकता है ॥२३॥

आर्य जयन्धर, अब बड़े भाई ने क्या निश्चय किया है ?

---

कीदृशाः ज्ञानोत्सेकात्तत्त्वज्ञानमाहात्म्याद्विनाशिततामसगुणा विनाशितमिथ्याज्ञाना वा। अनेन धृतेः फलमुक्तम्। ज्ञानोद्रेकात् इत्यपि पाठः। उद्रेकः प्रौढिः। अनेन तत्रासङ्ग उक्तः। अत्र तु प्रथमं वनवासः ततः समाधिलाभः ततस्तत्त्वज्ञानेन मिथ्याज्ञानविनाशः ततः सत्त्वनिष्ठता ततः साक्षात्कार इति तत्त्वज्ञानोत्पादकः क्रमोपि बोद्धव्यः। यद्वा अन्यत्र सङ्गत्यागः, ततो धृतिः, ततः प्रज्ञाप्रौढिः, ततोऽवद्यालक्षणतमोग्रन्थिभेदः, ततो राजसप्रवृत्त्युच्छेदो, मूलोच्छेदात्, ततः सात्त्विकी प्रवृत्तिः, तस्याः फलमीश्वरप्रसादः, तेन भगवान्समस्ततमः प्रकाशयोः, परतरो दृश्यते। तमेवं तादृशपुरुषोऽपि न पश्यति। किं पुनर्मूढो दुर्योधन इति भावः। यं कीदृशम्। कमप्यनिर्वचनीयम्। तमसां मिथ्याज्ञानानां ज्योतिषां तत्त्वज्ञानानां वा परस्तात्परम्। ताभ्यामप्यगम्यमित्यर्थः। अत एव कमपीत्युक्तम् तं देवं कथमयं मोहान्धो जानातीति। पुनः कीदृशम्। पुराणमनादिसिद्धम्। तथा चायमपियमादिसि पुरुषधारेयमम्यमिति ध्वनितम् ॥२३॥

कञ्चुकी—स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः। (इति निष्क्रान्तः)।

(नेपथ्ये कलकलानन्तरम्)

भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयोऽस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च, शृण्वन्तु भवन्तः।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्द्यूतारणिसंभृतं नृपवधूकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥२४॥

भीमसेनः—(आकर्ण्य सहर्षम्) जृम्भतां जृम्भतामप्रतिहतप्रसरमार्यस्य क्रोधज्योतिः।

द्रौपदी—नाथ, किमिदानीमेष प्रलयजलधरस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते [णाह, किं दानीं एसो पलअजलहरत्थणिदमंसलो क्खणे क्खणे समरदुन्दुही ताडीअदि।]

भीमसेनः—देवि, किमन्यत्। यज्ञः प्रवर्तते।

द्रौपदी—(सविस्मयम्) क एष यज्ञः। [को एसो जण्णो।]

भीमसेनः—रणयज्ञः यथाहि—

---

यत्सत्येति। [यत् सत्यव्रतभङ्गात् भीरु मनो यस्य तेन] युधिष्ठिरेण इति शेषः। यत्नेन मन्दीकृतम्। अवश्यपालनीयः संकल्पो व्रतम्। सत्यमेव व्रतम्। मन्दीकृतं। मनसेति विशेषणद्वारा विशेष्यप्रतिपत्तिरिति वा। यत्क्रोधज्योतिः शमवता (प्रशस्तशान्तिशालिना कुलस्य शान्तिं स्वास्थ्यं विनाशाभावात् इच्छता विस्मर्तुमपीहितमिष्टं शमवशात्क्रोधायावकाशमदत्त्वेत्यर्थः।) तदिदं द्यूतमेवारणिर्यज्ञकाष्ठभेदस्तत्र संभृतं समुपचितम् निर्मन्थ्यदारुणि त्वरणिर्द्वयोः इत्यमरः। नृपसुता द्रौपदी तस्याः केशाश्चाम्बराणि वस्त्राणि च तेषामाकर्षणैरुद्दीपितमिति

**कञ्चुकी**—कुमार स्वयं ही जाकर महाराज के निश्चय को जान लेंगे। (यह कहकर निकल जाता है)।

(नेपथ्य में कलकल ध्वनि के उपरान्त)

हे द्रुपद, विराट, वृष्णि, अन्धक, सहदेव आदि हमारी सेना के सेनापतियों और कौरवों की सेना के मुख्य वीरों, आप लोग सुनें—

नृपवधु (द्रौपदी) के केश और वस्त्रों के खींचने से द्यूतरूपी अरणि में उत्पन्न, युधिष्ठिर की वह महान् क्रोधाग्नि, जिसे सत्य-प्रतिज्ञा के उल्लङ्घन से भयभीत चित्त वाले (युधिष्ठिर) ने यत्नपूर्वक शान्त कर रक्खा था और जिसे कुल में शान्ति चाहने वाले तथा शान्ति धारण करने वाले (युधिष्ठिर) ने भुलाना भी चाहा था, यह (अब) कुरु-कुल रूपी वन में भड़क उठी है ॥२४॥

**भीमसेन**—(सुनकर हर्ष के साथ) बढ़े आर्य की क्रोधाग्नि ऐसी बढ़े कि उसकी गति अवरुद्ध न होवे।

**द्रौपदी**—नाथ, प्रलयकाल में मेघ के गर्जन के समान गम्भीर यह युद्ध का नगाड़ा क्षण-क्षण में अब क्यों बजाया जा रहा है ?

**भीमसेन**—देवी, और क्या ? यज्ञ प्रारम्भ हो रहा है।

**द्रौपदी**—(आश्चर्य से) यह कौन-सा यज्ञ है ?

**भीमसेन**—(यह) युद्ध-रूपी यज्ञ (है)। इस प्रकार कि—

---

शेषः) तदिदं यौधिष्ठरं युधिष्ठिरसम्बन्धि (महत् क्रोधज्योतिः क्रोधदावानलं इत्यर्थः) कुरव एव वनं तस्मिन्। जृम्भते प्रकाशते ॥२४॥

प्रलयजलधरमन्थरस्तनितमांसलोद्धोद्भीषणः क्षणे क्षणे इत्यादि। अत्र मन्थरस्तनितं गम्भीरगर्जितं तद्वन्मांसलोऽधिको य उद्घोषः उच्चैः शब्दस्तेन भीषणः। इह विद्रवनामा गर्भसन्धिः। यदाह—शङ्काकलङ्कप्रभवः संभ्रमो विद्रवो स्ततः। इति। ननु भणामीत्यर्थः।

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥२५ ॥

सहदेवः—आर्य गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम् ।

भीमसेनः—वत्स एते वयमुद्यता एवार्यस्यानुज्ञामनुष्ठातुम् । (उत्थाय) देवि, गच्छामो वयमिदानीं कुरुकुलक्षयाय ।

द्रौपदी—(वाष्पं धारयन्ती) नाथ, असुरसमराभिमुखस्य हरेरिव मङ्गलं युष्माकं भवतु [णाह, असुरसमराहिमुहस्स हरिणो विअ मङ्गलं तुह्माणं होदु ।]

उभौ—प्रतिगृहीतं मङ्गलवचनमस्माभिः ।

द्रौपदी—अन्यच्च नाथ, पुनरपि युस्माभिः समरादागत्याहं समाश्वासयितव्या [अण्णं च णाह, पुणोवि तुह्मेहिं समरादो आअच्छिअ अहं समास्ससइद्वा ।]

भीमसेनः—ननु पाञ्चालराजतनये किमद्याप्यलीकाश्वासनया ।

भूयः परिभववक्षान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥२६॥

---

वीजप्ररोह उद्भेदो यत्किंचित्प्रभवनात्मकः । इति भरतादुद्भेदरूपं मुखसन्धिमाह—चत्वार इति । चत्वारो भीमार्जुनसहदेवनकुलाः । ऋतुमृतौ वा यजन्ति इति ऋत्विजः । ऋत्विग्दधृग् इति क्विवन्तो निपातः । (पा० ३. २. ५९) ब्रह्मोद्गातृहोत्रध्वर्युरूपाः । स भगवान् हरिः कर्मोपदेष्टाचार्यः । [संग्राम एवाध्वरो यज्ञस्तत्र] दीक्षितो दीक्षां प्रापितः । [यद्वा दीक्षा जातास्य तरकादित्वादितच्] नरपतिर्युधिष्ठिर । पत्नी द्रौपदी गृहीतव्रता कृतनियमा । [व्रतमत्र कौरवनिधने केशान्सहरिष्यामीति नियमरूपम् ।] कौरव्याः कुरुकुलजाताः । पशवो यथार्थं घातनीयाः । राजन्योपनिमन्त्रणाय क्षत्रियाह्वानाय । रसति शब्दायते । स्फीत मनोज्ञं [सुमहानादं च] यथा स्यादेवम् । यशोदुन्दुभिर्यशःप्रधानो वाद्यविशेषः । यद्वा यशोदुन्दुभिः पटहः । स्याद्यशः पटहो ढक्का

हम चारों पुरोहित हैं, वह भगवान् विष्णु (कर्त्तव्य) कर्म का उपदेश देने वाले (आचार्य) हैं, राजा (युधिष्ठिर) युद्ध रूपी यज्ञ की दीक्षा लिए (यजमान) हैं, पत्नी (द्रौपदी) नियम धारिणी है, कौरव लोग (वलि होने वाले) पशु हैं (और) प्रिया के अपमान से उत्पन्न क्लेश की शान्ति फल है। (यह) यशो-दुन्दुभि राज-समूह को निमन्त्रित करने के लिये जोर से वज रही है ॥२५॥

सहदेव—आर्य, अब वड़े जनों से अनुमति पाये हम भी अपने पराक्रम के योग्य आचरण करने के लिये जाते हैं।

भीमसेन—वत्स, आर्य की आज्ञा का पालन करने के लिये हम तैयार ही हैं। (उठकर) देवी, अब हम कौरवों के नाश के लिये जाते हैं।

द्रौपदी—(आँसू भरकर) नाथ, असुरों के साथ युद्ध के लिये जाने वाले विष्णु के समान आपका मङ्गल होवे।

दोनों—हमें (आपका) मङ्गल-वचन स्वीकार है।

द्रौपदी—और नाथ, युद्ध से लौटकर मुझे फिर भी सान्त्वना दीजियेगा।

भीमसेन—पाञ्चाल की राजकुमारी, अब झूठे आश्वासन से क्या (प्रयोजन)?

(अब) फिर वृकोदर को सब कौरवों का विना नाश किये (और) तिरस्कार-जन्य ग्लानि तथा लज्जा से दीन-मुख न देखोगी ॥२६॥

---

भेर्यामानकदुन्दुभिः। इत्यमर ॥१५॥

अनुज्ञात इति पञ्चम्यास्तसिः। [अनुज्ञाताः कृतानुमतयः] इह देवि गच्छामः इत्यनेन कारणरूपो मुखसन्धिः। यदाह—उद्यमः प्रस्तुतार्थस्य कारणं परिकीर्तितम्। हरेर्यन्मङ्गलं वृत्तं तद्युष्माकं भवतु। यच्चाम्बा कुन्ती वदति तद्युष्माकं भवतु। अलीकं मिथ्याः।

भूय इति। भूयः परिभवः प्रचुरपराभवः। [भूय इति पदच्छेदो युक्ततरः। परिभवेन या क्लान्तिर्लज्जा च ताभ्याम्। क्षान्तीति पाठे परिभवस्य क्षान्त्या या लज्जा यथा विदुरितं क्लिष्टं विच्छायं वा आननं यस्य तम्। अकृतकौरवनिःपातं पुनः पश्यसि।] क्षान्तिः क्षमा। विदुरितं व्याप्तम्। वृकोदरं भीमम्। म पश्यसि इति पाठे भविष्यति लट् ॥२६॥

द्रौपदी—नाथ, मा खलु मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनपे-(वे) क्षितशरीराः संचरिष्यथ। यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते। [णाह, मा क्खु मा क्खु जण्णसेणीपरिहवुद्दीविदकोवाणला अणवेक्खिदसरीरा संचरिस्सध। जदो अप्पमत्तसंचरणिज्जाइं रिउबलाइं सुणीअन्ति।]

भीमसेन—अयि सुक्षत्रिये,

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यकबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥२७॥

(इति निष्क्रान्ताः सर्वे)

॥ इति प्रथमोऽङ्कः ॥

---

[अनपेक्षितमचिन्तितं शरीरं शरीररक्षणामिति यावत् यैः। अकृतशरीर-रक्षणचिन्ता इत्यर्थः। अप्रमत्तं यथा तथा संचरणीयानि।] अत्र खलु निषेधे-ऽवधारणे वा। अप्रमत्तः सावधानः। प्रमत्त इत्यत्र रदाभ्यां निष्ठातो नः पूर्वस्य च दः इति सूत्रेण न नत्वम् न ध्याख्यापॄमूर्छिमदाम् इति प्रतिषेधात् ॥

अन्योन्येति। [पाण्डुपुत्राः संग्राम एव एकः मुख्यः अर्णवः तस्य अन्तः पयसि विचरितुं पण्डिताः सन्ति। अतो न शङ्का कार्या इति भावः। कीदृशे पयसि। अन्योन्यमन्योन्येषां वा य आस्फालस्तेन भिन्नाः विघटितदेहा ये द्विपा गजास्तेषां रुधिरं च वसा हृन्मेदश्च माँसं च मस्तिष्कं मस्तकसंभृतस्नेहश्च रुधिर···स्तिष्कं तदेव पङ्कस्तस्मिन् मग्नानां पतितानां स्यन्दमानामुपरि कृताः पदन्यासा यैः

कञ्चुकी—देव, भग्नं भग्नम् ।

(सर्वे सातङ्कं पश्यन्ति)

राजा—किं नाम ?

कञ्चुकी—भग्नं भीमेन ।

राजा—आः किं प्रलपसि ?

भानुमती—आर्य, किमनर्थं मन्त्रयसे [अज्ज किं अणत्थं मन्तेसि ।]

कञ्चुकी—(संभयम्) ननु भग्नं भीमेन भवतः ।

राजा—धिक् प्रलापिन् वृद्धापसद, कोऽयमद्य ते व्यामोहः ।

कञ्चुकी—देव, न खलु कश्चिद् व्यामोहः । सत्यमेव ब्रवीमि ।

भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥२३॥

राजा—बलवत्समीरणवेगात्कम्पिते भुवने भग्नः स्यन्दनकेतुः । तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति ।

कञ्चुकी—देव, न किंचित् । किन्तु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्योदेव इति स्वामिभक्तिर्मां मुखरयति ।

भानुमती—आर्यपुत्र, परिहार्यतामेतदनिमित्तं प्रसन्नब्राह्मणवेदानुघोषेण होमेन च । [अज्जउत्त पडिहरीअदु एदं अणिमित्तं पसण्णब्रह्मणवेआणुघोसेण होमेण अ ।]

राजा—(सावज्ञम्) ननु गच्छ । पुरोहितसुमित्राय निवेदय ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रान्तः) ।

(प्रविश्य)

प्रतीहारी—(सोद्वेगमुपसृत्य) जयतु जयतु महाराजः । महाराज, एषा खलु

---

मभीप्सितम् । वाक्यान्तरेण संयोगाच्छलोऽयमभिधीयते ॥ इति भरतः । किं नामेति । नाम प्रकाश्ये । किं तदिति प्रकाशयेत्यर्थः । आर्य किमानार्यं कथयसि ॥

भग्नमिति । भीमेन मरुता वायुना अथ च भीमसेनेन । मरुता वायुपुत्रेण मरुतेत्यत्र आत्मा वै जायते पुत्रः इत्यभेदोपचाराद्वा तद्धितलोपाद्वा साधुतेत्यव-

**कञ्चुकी**—महाराज, तोड़ दिया, तोड़ दिया।

(सब भय से देखते हैं)

**राजा**—क्या हुआ ?

**कञ्चुकी**—भीम ने तोड़ दिया।

**राजा**—अरे ! क्या बक रहा है ?

**कञ्चुकी**—(भयपूर्वक) निश्चित ही भीम ने आपका तोड़ दिया।

**राजा**—धिक्कार ! बकवादी, अधम वृद्ध, आज तुझे यह क्या बुद्धि विभ्रम हो गया है ?

**कञ्चुकी**—महाराज, (मुझे) कोई बुद्धि-विभ्रम नहीं हुआ है। बिल्कुल सच कह रहा हूँ—

भयङ्कर वायु से तोड़ दी गई आपके रथ के ध्वजा, घुंघुरुओं के शब्द से चीत्कार करती हुई, मानो, पृथ्वी पर गिर पड़ी है।

**राजा**—तीव्र वायु के वेग से जगत् से कंप जाने पर रथ की ध्वजा टूट गई तो क्या कारण है कि इस तरह जोर-जोर से बक रहे हो—'तोड़ दिया, तोड़ दिया।'

**कञ्चुकी**—महाराज, कुछ भी नहीं। किन्तु इस अनिष्ट के शमन के लिये महाराज को सूचित कर देना चाहिये, यह स्वामि-भक्ति ही मुझे कहने के लिये विवश कर रही है।

**भानुमती**—आर्यपुत्र, प्रसन्न हुये ब्राह्मण के वेद-पाठ और यज्ञ से इस अपशकुन का निवारण करा दीजिये।

**राजा**—(तिरस्कारपूर्वक) अच्छा जाओ। पुरोहित सुमित्रा से कह दो।

**कञ्चुकी**—जैसी महाराज की आज्ञा (बाहर चला जाता है)।

(प्रवेश करके)

**प्रतीहारी**—(घबराई हुई समीप जाकर) जय हो, महाराज की जय हो।

---

वधेयम्। केतनं चिह्नम् **किङ्किणीक्वाणः** क्षुद्रघण्टिकाशब्दः। [तेन आवद्धं; आक्रन्दो येन] ॥२२॥

**स्यन्दनो** रथस्तस्य **केतुः** चिह्नम्। [अनिमित्तमपशकुनः]। आर्यपुत्र अन्तरीयतामेतत्प्रसन्नब्राह्मणवेदघोषेण। [पुरोहितेति]। अत्र चाणक्यः—वेदवेदाङ्गतत्वज्ञो

जामातुः सिन्धुराजस्य माता दुःशला च प्रतीहारभूमौ तिष्ठति । [जअदु जअदु महाराओ । महाराअ, एसा क्खु जामाद्‌दुणो सिन्धुराअस्स मादा दुस्सला अ पडिहारभूमीए चिट्ठदि ।]

राजा—(किंचिद्विचिन्त्यात्मगतम्) किं जयद्रथमाता दुःशला चेति । कच्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न किंचिदत्याहितमाचेष्टितं भवेत् । (प्रकाशम्) गच्छ । प्रवेशाय शीघ्रम् ।

प्रतीहारी—यन्महाराज, आज्ञापयति । (इति निष्क्रान्ता) । [जं महाराओ आणवेदि ।]

(ततः प्रविशति संभ्रान्ता जयद्रथमाता दुःशला च)

(उभे सास्रं दुर्योधनस्य पादयोः पततः)

माता—परित्रायतां परित्रायतां कुमारः । [परित्ताअदु परित्ताअदु कुमालो ।]

(दुःशला रोदिति)

राजा—(ससंभ्रममुत्थाप्य) अम्ब, समाश्वसिहि समाश्वसिहि । किमत्याहितम् । अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ।

माता—जात, कुतः कुशलम् । [जाद कुदो कुसलम् ।]

राजा—कथमिव ।

माता—(साशङ्कम्) अद्य खलु पुत्रवधामर्षोद्दीपितेन गाण्डीविना अनस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः । [अज्ज क्खु पुत्तवहामरिसुद्दीविदेण गण्डीविणा अणत्थमिदे दिअहणाहे तस्स वहो पडिण्णादो ।]

राजा—(सस्मितम्) इदं तदश्रुकारणमम्बाया दुःशलायाश्च । पुत्रशोकादुन्मत्तस्य किरीटिनः प्रलापैरेवमवस्था । अहो मुग्धत्वमबलानाम् । अम्ब, कृत विषादेन । वत्से दुःशले, अलमश्रुपातेन । कुतश्चायं तस्य धनञ्जयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्तिमुत्पादयितुम् ।

माता—जात, ते हि पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः परिक्रामन्ति । [जाद दे हि पुत्तबन्धुवहामरिसुद्दीविदकोवाणला अणपेक्खिदसरीरा वीरा परिक्कामन्ति ।]

---

जपहोमपरायणः । आशीर्वादवचोयुक्त एष राजपुरोहितः ॥ इति ॥ अयं च

महाराज, जामाता सिन्धुराज की माता और दुःशला द्वारा-भूमि पर उपस्थित हैं।

**राजा**—(कुछ सोचकर, स्वगत) क्या ? जयद्रथ की माता और दुःशला ? कहीं अभिमन्यु के वध से क्रुद्ध पाण्डु-पुत्रों ने कुछ अनर्थ तो नहीं कर दिया ? (प्रकट में) जाओ, शीघ्र अन्दर ले जाओ।

**प्रतीहारी**—जैसी महाराज आज्ञा दें। (यह कहकर बाहर जाती है)।

(तत्पश्चात् घबराई हुई जयद्रथ की माता और दुःशला प्रवेश करती हैं)

दोनों आँसू भरकर दुर्योधन के पैरों में पड़ती हैं।

**माता**—बचाइये, कुमार बचाइये।

(दुःशला रोती है)

**राजा**—(जल्दी से उठाकर) माता जी, धैर्य रखिये, धैर्य रखिये। क्या अनर्थ हुआ ? अप्रतिम वीर जयद्रथ युद्ध-भूमि में कुशल तो हैं ?

**माता**—पुत्र कुशल कहाँ से ?

**राजा**—क्यों, क्या हुआ ?

**माता**—(आशङ्कापूर्वक) आज पुत्र के वध से उत्पन्न क्रोध से भड़के हुये गाण्डीवधारी (अर्जुन) ने सूर्य के छिपने से पिहले ही उसके वध की प्रतिज्ञा की है।

**राजा**—(मुस्कराकर) तो माता जी और दुःशला के आँसुओं का कारण यह है। पुत्र के शोक से पागल हुये अर्जुन के प्रलाप से यह अवस्था है। ओह ! स्त्रियों में कितना भोलापन होता है ! माता जी, दुःख न कीजिए। प्रिय दुःशला आँसू न गिराओ। दुर्योधन की भुजा रूपी परिघ से रक्षा किये गये महारथी जयद्रथ के लिये विपत्ति पैदा करने का सामर्थ्य अर्जुन में कहाँ हैं ?

**माता**—पुत्र, पुत्र और बन्धुओं के वध को न सहने से प्रज्ज्वलित क्रोधाग्नि वाले वह (पाण्डव) वीर अपने शरीर की चिन्ता न करके घूम रहे हैं।

---

वेदविहितं कुर्याच्छान्तिकपौष्टिकम्। इत्यग्निपुराणम्। सिन्धुराजमाता। अत्र सिन्धुराजो जयद्रथः। [प्रतीहारभूमिर्द्वारम्]। [अमर्ष एषां संजातः इति अमर्षिताः तैः] अत्याहितमनर्थः ! अप्रतिरथस्य अविद्यमानः प्रतिरथः यस्य। उन्मत्तस्य जातचित्तविभ्रमस्य। मुग्धत्वं विचारवैक्लव्यम्। दुर्योधनस्य बाहू परिघौ अर्गले इव ताभ्यां रक्षितस्य]।

राजा—(सोपहासम्) एवमेतत् । सर्वजनप्रसिद्धैवामर्षिता पाण्डवानाम् । पश्य—

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रपुरतो गौर्गौरिति व्याहृता ।
तस्मिन्नेव स किं नु गाण्डिवधरो नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ॥२४॥

माता—असमाप्तप्रतिज्ञाभारस्यात्मवधोऽस्य प्रतिज्ञातः । [असमत्तपडिण्णाभारस्स आप्पवहो से पडिण्णादो ।]

राजा—यद्येवमलमानन्दस्थानेऽपि ते विषादेन । ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति । अन्यच्च मातः, का शक्तिरस्ति धनञ्जयस्यान्यस्य वा कुरुशतपरिवारवर्धितमहिम्नः कृपकर्णद्रोणाश्वत्थामादिमहारथद्विगुणीकृतनिरावरणविक्रमस्य नामापि ग्रहीतुं ते तनयस्य । अयि सुतपराक्रमानभिज्ञे ।

धर्मात्मजं प्रति यमौ च कथैव नास्ति
मध्ये वृकोदरकिरीटभृतोर्बलेन ।
एकोऽपि विस्फुरितमण्डलचापचक्रं
कः सिन्धुराजमभिषेणयितुं समर्थः ॥२५॥

---

हस्ताकृष्टेति । [मम आज्ञया दुःशासनेन हस्तेन आकृष्टमत एव विलोलं केशाश्च वसनं च केशवसनं यस्याः सा हस्ताकृष्टविलोलकेशवसना पाञ्चाली राजचक्रपुरतः गौः गौः इति व्याहृताः । व्याहृतेति णिजगर्भम् । तेन व्याहारितेत्यर्थः । राजवधूनां गौर्गौरित्यभिधानमतिहानिकरमिति समाचारः । तस्मिन्काले तता विस्तृता ज्या पतिञ्चका यत्र तादृशं गाण्डिवं धनुर्यस्य सः । गाण्डीवमपि गाण्डिवम् इति शब्दभेदः । पृथानन्दनोऽर्जुन । [नासीत्किनु । अपि त्वासीदेव । क्षत्रियवंशोत्पन्नस्य तत्रापि यूनो यौवनशालिनः । न तु वार्धक्याद् गलितोत्साहस्य वीतशक्तेर्वा । तत्रापि कृतिनः कृतहस्तस्य युद्धकलाप्रवीणस्येत्यर्थः ।] आस्पदं स्थानम् ॥२४॥

**राजा**—(उपहास के साथ) ऐसा ही है ! पाण्डवों की असहनशीलता सब लोगों में प्रसिद्ध ही है । देखा—

मेरी आज्ञा से दुःशासन ने हाथ से खींचे गये, (इसलिये) चञ्चल केशों और वस्त्र वाली पाञ्चाल-पुत्री (द्रौपदी) से राज-समूह के सामने 'गौ, गौ' यह कहलाया था । क्या गाण्डीवधारी वह पृथा का पुत्र वहाँ नहीं था ? क्या वह क्षत्रिय वंश में उत्पन्न शस्त्र-निपुण युवक के क्रोध का कारण नहीं था ॥२४॥

**माता**—प्रतिज्ञा का भार समाप्त न कर लेने पर उसने आत्मघात की प्रतिज्ञा की है ।

**राजा**—यदि ऐसा है तो आपको हर्ष के स्थान में भी दुःख नहीं करना चाहिये । तब तो कहना चाहिये कि अनुजों सहित युधिष्ठिर नष्ट हो गया । दूसरे माता जी, अर्जुन या अन्य किसी में क्या शक्ति है जो तुम्हारे पुत्र का, सौ कौरवों के समूह से जिसकी महिमा बढ़ गई है और कृप, द्रोण, अश्वत्थामा आदि महारथियों द्वारा जिनका दुर्धर्ष पराक्रम दुगुना हो गया हैं, नाम भी ले सके । अरी, पुत्र के पराक्रम से अपरिचित,

युधिष्ठिर और जोड़ियों (नकुल और सहदेव) का तो कहना ही नहीं, भीम और अर्जुन में से कौन-सा एक चमकते हुये वर्तुलाकार धनुर्मण्डल वाले सिन्धुराज पर बलपूर्वक आक्रमण करने में समर्थ है ॥२५॥

---

असमाप्तप्रतिज्ञाभारस्यात्मवधस्तेन व्यवसितः । [**कुरूणां शतमेव परिवारः** तेन **वर्धितो** महिमा यस्य । **महारथैः**—एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः ॥ इत्युक्तलक्षणैः **द्विगुणीकृतः निरावरणः** अप्रतिबन्धः **विक्रमो** यस्य ।] **परिवारो**ऽनुचरः । **निरावरणो**ऽन्तरायशून्यः ।

धर्मात्मजमिति । **धर्मात्मजो** युधिष्ठिरः **यमौ** नकुलसहदेवौ इति इत्यन्वयः भीमार्जुनयोर्मध्ये **एकोऽपि कः सिन्धुराजम्** [**अभिषेणयितुं** सेनयाभिगन्तुम्] अभियोद्धुं **समर्थः** । अपि तु न कोऽपि । [सेनयाभिगन्तुमित्यर्थे 'सत्यापपाश' इत्यादिना णिच् । उपसर्गात्सुनोति इत्यादिना षत्वम् ।] **विस्फुरितं मण्डलाकारं** चापमङ्कं यस्य तम् ॥२५॥

भानुमती—आर्यपुत्र, यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभारो धनञ्जयः स्थानं खलु शङ्कायाः । [अज्जउत्त, जइवि एवं तहवि गुरुकिदपडिण्णाभारो धणंजओ ट्ठाणं क्खु संकाए ।]

माता—जाते, साधु कालोचितं त्वया मन्त्रितम् । [जादे साहू कालोइदं एतु मन्तिदं ।]

राजा—आः, ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः । पश्य—

कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः
शिलष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः ।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां बलाना-
माक्रान्ता भ्रातृभिर्मे दिशी-दिशि समरे कोटयः संपतन्ति ॥२६॥

अपि च भानुमति विज्ञातपाण्डवप्रभावे, किं त्वमप्येवमाशङ्कसे । पश्य—

दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥२७॥

कः कोऽत्र भोः । जैत्रं मे रथमुपकल्पय तावत् । यावदहमपि तस्य प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसम्पादितमशस्त्रपूतं मरणमुपदिशामि ।

---

कोदण्डेति । कोदण्डो धनुः । [तस्य ज्यायाः किणो घर्षणजन्य चिह्नं तस्य अङ्को येषां तैः । अगणिता अचिन्तिता रिपवः यैः ।] कङ्कटेन संनाहेन उन्मुक्तोऽनाश्लिष्टो देहो येषां तैः । तथा चात्मगौरवात्संनाहमकुर्वाणैरित्यर्थः । [कङ्कटामुक्तदेहैरिति पाठे कंकटा आमुक्ताः पिनद्धा येषु तथा देहा येषाम्] । शिलष्टमन्योन्यस्य] आतपत्रं छत्रं । तैः करणभूतैः श्वेतकमलवनभ्रमं कुर्वद्भिः । [मे भ्रातृभिः आक्रान्ताः । रेणुना ग्रस्ताऽर्कस्य भा यैः तेपाम् । प्रचलयन्त्यो या असिलतास्ताभिः] दन्तुराणां निम्नोन्नतानां बलानां कोटयः संख्याभेदाः प्रदेशा वा । संपतन्ति गच्छन्ति । कोटिरग्रे प्रकर्षे च संख्यापार्श्वप्रदेशयोः इति विश्वः ॥

**भानुमती**—आर्यपुत्र, यद्यपि यह ठीक है। फिर भी की गई प्रतिज्ञा के भारी भार वाला अर्जुन शङ्का का कारण हो सकता है।

**माता**—पुत्री, तूने ठीक समयोचित बात कही है।

**राजा**—ओह ! क्या मुझ दुर्योधन के लिये भी पाण्डव भय का कारण हो सकते हैं ? देखो—

धनुष की डोर के घाव के चिह्न वाले, शत्रुओं की चिन्ता न करने वाले, (इसलिये) शरीर पर से कवच खोल देने वाले और परस्पर सटे हुये छत्रों से श्वेत कमलों के वन की भ्रान्ति उत्पन्न करने वाले मेरे भाइयों के अधिष्ठित, सेनाओं की कोटि-कोटि संख्यायें, जिन्होंने धूलि से सूर्य की क्रान्ति ग्रस ली है और जो घुमाई गई तलवार रूपी लताओं से विकराल है, दिशा-दिशा में युद्ध-भूमि में मिलकर जा रही हैं ॥२६॥

और, पाण्डवों के प्रभाव को जानने वाली भानुमती, तू भी ऐसी आशङ्का कैसे कर रही है ? देख—

दुःशासन के हृदय से रुधिर रूपी जल के पीने और गदा से दुर्योधन की जङ्घा को तोड़ डालने के विषय में तेजस्वी पाण्डवों की जैसी प्रतिज्ञा थी, वैसी ही युद्ध-भूमि में जयद्रथ के वध के विषय में भी समझनी चाहिये ॥२७॥

अरे यहाँ कोई है ? मेरे जय-शील रथ को तैयार करो तो अब मैं भी केवल जयद्रथ की रक्षामात्र से उस धृष्ट पाण्डव का झूठी प्रतिज्ञा से उत्पन्न लज्जा से किये गये और शस्त्र पवित्र न किये गये मरण का उपदेश देता हूँ।

---

उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् । इत्यमरः ॥२६॥

दुःशासनेति । यथा दुःशासनस्य हृदयरक्तमेवाम्बु जलं तस्य पाने । यथा च दुर्योधनस्य ऊरुभङ्गे ऊर्वोः भङ्गविषये । तथा समरमूर्धनि रणशिरसि जयद्रथ-वधेऽपि तेजस्विनां पराक्रमिणां पाण्डवानां प्रतिज्ञा ज्ञेया ।] रक्तक्षतजशोणितम् इत्यमरः ॥२७॥

[जैत्रमिति जेतृशब्दात् प्रज्ञादित्वादण् । उपकल्पय सज्जं कृत्वा आनय । प्रगल्भस्य धृष्टस्य पाण्डवस्यार्जुनस्य । मिथ्याप्रतिज्ञा तया यद् वैलक्ष्यं लज्जा तेन संपादितं विहितम् । शस्त्रेणशस्त्रव्यापारेण पूतं शस्त्रपूतम् । युद्धे

(प्रविश्य)

कञ्चुकी—देव,

उद्घातक्वणितविलोलहेमघण्टः

प्रालम्बद्विगुणितचामर प्रहासः ।

सज्जोऽयं नियमितवल्गिताकुलाश्वः

शत्रूणां क्षपितमनोरथो रथस्ते ॥२८॥

राजा—देवि, प्रविश त्वमभ्यन्तरमेव । (यावदहमपि तस्य प्रगल्भपाण्डवस्य इत्यादि पठन् परिक्रामति) ।

(इति निष्क्रान्ताः सर्वे)

*** इति द्वितीयोऽङ्कः ***

---

शस्त्रप्रहारेण मृतस्य वीरस्य स्वर्गप्राप्तिहेतुत्वात्तन्मरणस्य पूतत्वम् ।—तथा न भवतीति अशस्त्रपूतम् । जैत्रं जयशालिनम् । अशस्त्रपूतमशस्त्रकृतम् ॥

उद्घातेति । उद्घात आघातः तेन क्वणिताः शब्दिता विलोलाः प्रचला हेमघण्टा यस्य ।] यद्वा स्यादभ्यादानमुद्घात आरम्भः इत्यमरः । तेनोद्घात उपक्रम इत्यर्थः । प्रालम्बो लम्बितो हारः । [तेन द्विगुणितः चामरस्य प्रहासः धवलिमा यत्र । प्रालम्बं द्विगुणितं द्विपार्श्वे द्विधाबद्धं यच्चामरं तस्य प्रहासो यत्र इति केचित् ।] प्रहासः प्रकाशः । नियमिता अतएव वल्गितेनाकुला अश्वा यस्य । नियमितं वल्गितं येषां तथाभूता अतएव आकुला अश्वा यस्येति वा । 'नियमितवल्गुवल्गिताश्वः' इति पाठे नियमितं वल्गु चारु वल्गितं येषां तथाभूता

(प्रवेश करके)

**कञ्चुकी**—महाराज,

प्रतिघात से बजती हुई चञ्चल सुवर्ण की घण्टियों वाला, लटकती मालाओं से दुगुने किये गये चामर के हास (धवलता) वाला, गति के नियमित होने से चञ्चल घोड़ों वाला और शत्रुओं के मनोरथों को नष्ट कर देने वाला आपका यह रथ तैयार है ॥२८॥

**राजा**—देवी, तुम भी अन्दर जाओ। ('तो अब मैं उस धृष्ट पाण्डव···' इत्यादि कहता हुआ घूमता है)।

(सब निकल जाते हैं)

*** द्वितीय अङ्क समाप्त ***

---

अश्वा यस्य।] **नियमितो वेल्लितेन** गतिविशेषणाकुलितोऽश्वो यत्र स तथा। **शत्रूणां क्षपिता नाशिता मनोरथा** येन स तथोक्तः। अत्र शत्रूणामिति षष्ठ्या मनोरथेन सम्बन्धः। सापेक्षत्वात्समासः। तदुक्तम्—सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते। वाक्यवत्सा व्यपेक्षापि वृत्तावपि न हीयते॥ इति ॥२८॥

अत्राङ्के नायिकाचेट्योर्भाषा शौरसेनी। तदुक्तं तत्रैव नायिकायां च चेट्यां च तथा चैव विदूषके। शौरसेनीं समाश्रित्य भाषा योज्या तु नाटके। इति। एवमन्यत्रापि॥

असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि।
जगद्धरं तस्य कृतौ गतोऽयमङ्को द्वितीयो वरटिप्पनेऽत्र॥

* द्वितीयोऽङ्कः *

# तृतीयोऽङ्कः

(ततः प्रविशति विकृतवेषा राक्षसी)

राक्षसी—(विकृतं विहस्य । सपरितोषम्)

हतमानुषमांसभारके कुम्भसहस्रं वसाभिः संचिते ।
अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु ॥१॥

(नृत्यन्ती सपरितोषम्) यदि सिन्धुराजवधदिवस इव दिवसे-दिवसे समरकर्म प्रतिपद्यतेऽर्जुनस्तदापर्याप्तभृतकोष्ठागारं मांसशोणितैर्मे गृहं भविष्यति । (परिक्रम्य दिशोऽवलोक्य) अथ क्व नु खलु रुधिरप्रियो भविष्यति । तद्यावदेतस्मिन्समरे प्रियभर्तारं रुधिरप्रियमन्वेषयामि । (परिक्रम्य) भवतु । शब्दायिष्ये तावत् । अरे रुधिरप्रिय, रुधिरप्रिय, इत एहि, इत एहि ।

[हदमाणुशमंशभालए कुम्भशहश्शवशाहिं शंचिए ।
अणिशं अ पिबामि शोणिअं वलिशशदं शमले हुवीअदु ॥१॥]

[जइ शिन्दुलाअवहदिअहे विअ दिअहे-दिअहे शमलकम्म पडिवज्जइ अज्जुण तदो पज्जत्तभलिदकोठ्ठागाले मंशशोणिएहिं मे गेहे हुवीअदि । अह कहिं णु क्खु लुहिलप्पिए हुवीअदि । ता जाव इमश्श शमले पिअभत्तालं लुहिलप्पिअं अण्णेशामि । होदु । शद्दावइश्शं दाव । अले लुहिलप्पिआ लुहिलप्पिआ इदो एहि इदो एहि ।]

(ततः प्रविशति तथाविधो राक्षसः)

राक्षसः—(श्रमं नाटयन्)

प्रत्यग्रहतानां मांसं यद्युष्णं रुधिरं च लभ्येत ।
तदेष मम परिश्रम क्षणमात्रमेव लघु नश्येत् ॥२॥

[पच्चग्गहदाणं मंशए जइ उण्हे लुहिले अ लब्भइ ।
ता एशो मह पलिश्शमे क्खणमेत्तं एव्व लहु णश्शइ ॥२॥]

(राक्षसी पुनर्व्याहरति)

---

[विकृतः बीभत्सः वेषो यस्याः । विकृतं विकटम्] ।

# तृतीय अङ्क

(तत्पश्चाद् वीभत्स वेष वाली राक्षसी प्रवेश करती है)

**राक्षसी**—(भयंकर हंसी हंसकर सन्तोष के साथ)

मरे हुए मनुष्यों की मांस-राशि के हजारों घड़े चर्वी सहित सञ्चित कर लेने पर मैं दिन-रात रुधिर पी रही हूँ। यह युद्ध सौ वर्ष तक चलता रहे ॥१॥

(नाचती हुई सन्तोष के साथ) यदि सिन्धु देश के राजा (जयद्रथ) के वध के दिन के समान प्रतिदिन अर्जुन युद्ध-पराक्रम करता रहे, तो मेरा घर मांस और रुधिर से पूरे भ हुए कोठे वाला हो जायेगा। (घूमकर और चारों ओर देखकर) न जाने रुधिरप्रिय कहाँ है? तो इस युद्ध-क्षेत्र में अपने प्रिय पति रुधिरप्रिय का पता लगाऊँ। (घूमकर) अच्छा, पुकारती हूँ। औ, रुधिरप्रिय, रुधिरप्रिय, इधर आ, इधर आ।

(तब उसी प्रकार का राक्षस प्रवेश करता है)

**राक्षस**—(थकान का नाट्य करता हुआ)

यदि ताजे मरे हुए लोगों का मांस और गर्म रुधिर मिल जाये तो मेरी यह थकान क्षण-भर में ही तुरन्त मिट जाय ॥२॥

(राक्षसी फिर पुकारती है)

---

[हतेति। हतानां **मानुषाणां मांसस्य** भार एव भारकः तस्मिन्। **कुम्भानां सहस्रं** तेन परिच्छिन्नाभि **वसाभिः** सह **संचिते** सति अनिशमहोरात्रं **शोणितं** रुधिरं पिबामि। **समरो** युद्धं **वर्षशतं** शतवर्षपर्यन्तं **भवतु** ॥१॥]

समरकर्मातिप्रवर्तयत्यर्जुनस्तदा पर्यन्तं भृतकोष्ठागारं मम मांसशोणितैर्गृहं भविष्यति। भवतु। वादयिष्ये। अरे रुधिरप्रिय रुधिरप्रिय एहि तावत्।

[**यदि प्रत्यग्रं** सद्यः हतानां **मांसम् उष्णं** कोष्णं **रुधिरं** च **लभ्येत, तत्तदा एष मम परिश्रमः** खेदः **क्षणमात्रमेव** लघु द्राक् **नश्येत्** क्षयमियात् ॥२॥]

**कोष्ठागारे** कोठाखण्डम्। अरे को मां वादयते। कथं प्रिया मे वसागन्धा।

राक्षसः—(आकर्ण्य) **अरे कैषा मां शब्दायते ।** (विलोक्य) **कथं प्रिया मे वसागन्धा ।** (उपसृत्य) **वसागन्धे, कस्मान्मां शब्दायसे ।** [अले के एशे मं शद्दावेदि । कहं पिआ में वसागन्धा । वशागन्धे कीश मं शद्दावेशि ।]

रुधिरासवपानमत्तिके रणहिण्डनस्खलद्गात्रिके ।
शब्दायसे कस्मान्मां प्रिये पुरुषसहस्रं हतं श्रूयते ॥३॥

[लुहिलाशवपाणमत्तिए लणहिण्डन्तखलन्तगत्तिए ।
अद्दाअशि कीश मं पिए पुलिवशशहश्श हदं शुणीअदि ॥३॥]

राक्षसी—**अरे रुधिरप्रिय, इदं खलु मया तव कारणात्प्रत्यग्रहतस्य कस्यापि राजर्षेः प्रभूतवसास्नेहचिक्कणं कोष्णं नवरुधिरमग्रमांसं चानीतम् । तत्पिबैतत् ।** [अले लुहिलप्पिआ एदं क्खु मए तु कालणादो पच्चग्गहदश्श कश्शवि लाएशिणो प्पहूदवशाशिणेहचिक्कणं कोण्हं णवलुहिलं अग्गमशं अ आणीदम् । ता पिवाहि णम् ।]

राक्षसः—(सपरितोषम्) **साधु, वसागन्धे, साधु । शोभनं त्वया कृतम् । बलवदस्मि पिपासितः । तदुपनय ।** [शाहु वशागन्धे शाहु । शोहणं तुए किदम् । बलि अह्मि पिवाशिए । ता उवणेहि ।]

राक्षसी—**अरे रुधिरप्रिय ईदृशे हतनरगजतुरङ्गमशोणितवसासमुद्रदुःसंचरे समराङ्गणे परिभ्रमंस्त्वं पिपासितोऽसीत्याश्चर्यमाश्चर्यम् ।** [अले लुहिलप्पिआ, एदिशे हदणलगअतुलङ्गमशोणिअवशाशमुद्दुश्शंचले शमलङ्गणे पडिब्भमन्त तुमं पिवाशिएशि त्ति अच्चलिअं अच्चलिअम् ।]

राक्षसः—**अयि सुस्थिते, ननु पुत्रशोकसंतप्तहृदयां स्वामिनीं हिडिम्बादेवीं प्रेक्षितुं गतोऽस्मि ।** [अइ शुत्थिदे, णं पुत्तशोअशन्तत्तहिअअं शामिणीं हिडिम्बादेवीं पेक्खिदुं गदह्मि ।]

राक्षसी—**रुधिरप्रिय, अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कचशोको नोपशाम्यति ।** [लुहिलप्पिआ, अजवि शामिणीए हिडिम्बादेवीए घडुक्कअशोए ण उपशमइ ।]

---

यावदेनामुपसर्पामि । वसागन्धे किंनिमित्तं त्वं मां वादयसे ।

**राक्षस**—(सुनकर) अरे ! यह कौन मुझे पुकार रही है ? (देखकर) कैसे ? मेरी प्यारी वसागन्धा ! (समीप जाकर) वसागन्धा, मुझे क्यों पुकार रही हो ?

रुधिर रूपी आसव के पीने से मत्त हुई, युद्ध-क्षेत्र में भ्रमण से शिथिल-अङ्गों वाली, हे प्यारी, तु मुझे क्यों पुकार रही है ? हजारों पुरुष मरे हुए सुने जाते हैं ॥२॥

**राक्षसी**—अरे रुधिरप्रिय, मैं यह तेरे लिए ताजे मरे हुये किसी राजर्षि का अत्यधिक चर्बी की चिकनाई से चिकना, कुछ गर्म ताजा रुधिर और हृदय का माँस (कलेजा) लाई हूँ। इसे पी ले।

**राक्षस**—(सन्तोष के साथ) शाबाश ! वसागन्धा, शाबाश ! तूने बड़ा अच्छा किया। मैं बहुत ही प्यासा हूँ। तो मेरे पास लाओ।

**राक्षसी**—अरे रुधिरप्रिय, बड़ा आश्चर्य है कि तुम ऐसी युद्ध-भूमि में, जो मारे गये पुरुषों, हाथियों और घोड़ों के रुधिर और चर्बी के समुद्र से दुर्गम है, घूमते हुए भी प्यासे हो !

**राक्षस**—अरी, निश्चिन्त बैठी हुई, मैं पुत्र-शोक से व्याकुल हृदय वाली स्वामिनी हिडिम्बा देवी को देखने गया था।

**राक्षसी**—रुधिरप्रिय, तो अभी स्वामिनी हिडिम्बा देवी का घटोत्कच की मृत्यु से उत्पन्न शोक शान्त नहीं हुआ ?

---

रुधिरासवपानमत्तं रणभ्रमणस्खलद्गात्रि। वादयसे किमिति सुन्दरि मां पुरुषशतं हतमिति श्रूयते ॥३॥

प्रभूतवसाशोणितं मस्तिष्कचिक्कणमग्रमांसं चानीतम्। तत्खादय। पिब शोणितासवम्। अत्र प्रत्यग्रं नवम्। प्रभूतमुपचितम्। मस्तिष्क गोदीति प्रसिद्धम्। अग्रं प्रथमभागमुत्तम [बलवत् अत्यन्त] पिपासितः [ पिपासाः अस्य संजाता स तथा।] अत्र सुष्ठु मनोहरम्। बलितोऽतिशयितः। ननु पुत्र-शोकसंतप्तां देवीमन्वेष्टुं गतोऽस्मि। हे सुस्थिते ! ननु भणामि। अरे रुधिर-प्रिय तत्किमद्याप्यस्याः स्वामिन्या हिडिम्बादेव्याः पुत्रस्य घटोत्कचस्य शोको हृदयान्नोपशाम्यति।

राक्षसः—वसागन्धे, कुतोऽस्या उपशमः। केवलमभिमन्युवधशोकसमानदुःखया सुभद्रादेव्या याज्ञसेन्या च कथं कथमपि समाश्वास्ते। [वशागन्धे, कुदो शे उवशमे। केवलं अहिमण्णुवहशोअशमाणदुक्खाए शुभद्दादेवीए जण्णशेणीए अ कधं कधं वि शमाश्शाशीअदि।]

राक्षसी—रुधिरप्रिय, गृहाणैतद्धस्तिशिरःकपालसंचितमग्रमांसोपदंशम्। पिबनव शोणितासवम्। [लुहिलप्पिआ, गेण्ह एदं हत्थिशिलक्कवालशचिअं अग्गमंशोवदंशम्। पिवाहि णवशोणिआशवम्]

राक्षसः—(तथा कृत्वा) वसागन्धे, अथ कियत्प्रभूतं त्वया संचितं रुधिरमग्रमांसं च। [वशागन्धे अह किअप्पहूदं तुए शंचिअं लुहिलं अग्गमंशं अ।]

राक्षसी—अरे रुधिरप्रिय, पूर्वसंचितं जानास्येव त्वम्। नवसंचितं शृणु तावत्। भगदत्तशोणितकुम्भः सिन्धुराजवसाकुम्भौ द्वौ द्रुपदमत्स्याधिपभूरिश्रवःसोमदत्तवाल्हीकप्रमुखाणां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणां रुधिरवसामांसस्य घटा अपिनद्धमुखाः सहस्रसंख्याः सन्ति मे गेहे। [अले लुहिलप्पिआ, पूव्वसंचिअं जाणाशि जेव्व तुमं। णवशंचिअं शिणु दाव। भअदत्तशोणिअम्भे शिन्धुलाअवशाकुम्भे दुवे दुवदमच्छाहिवभूलिश्शवशोमदत्तवल्हीअप्पमुहाणं णलिन्दाणं वि पाकिदपुलिशाणं लुहिलवशामंशश्श घडा अपिणद्धमुहा शहश्शशङ्खा शन्ति मे गेहे।]

राक्षसः—(सपरितोषमालिङ्ग्य) साधु सुगृहिणी साधु। अनेन ते सुगृहिणीत्वेनाद्य पुनः स्वामिन्याः हिडिम्बादेव्याः संविधानेन च प्रनष्टं मे जन्मदारिद्रचम्। [शाहु शुग्घालणीए शाहु। इमिणा दे शुग्घालिणित्तणेण अज्ज उण शामिणीए हिडिम्बादेवीए शविहाणेण अ प्पणट्टं मे जम्मादालिद्दम्।]

राक्षसी—रुधिरप्रिय, कीदृशं स्वामिन्या संविधानं कृतम्। [लुहिलप्पिआ, केलिशे शामिणीए शंविहाणए किदे।]

राक्षसः—वसागन्धे, अद्य खल्वहं स्वामिन्या हिडिम्बादेव्या सबहुमानं शब्दाय्याऽऽज्ञप्तः—यथा रुधिरप्रिय, अद्यप्रभृति त्वया आर्यपुत्रस्य भीमसेनस्य पृष्ठतोऽनुपृष्ठं समर आहिण्डितव्यमिति। तत्स्यानुमार्गगामिनी हतमानुषशोणितनदीदर्शनप्रनष्टबुभुक्षापिपासस्येहैव मे स्वर्गलोको भविष्यति। त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं संचिनु। [वशान्धे अज्ज क्खु हगं शामिणिए

**राक्षस**—वसागन्धा, इसे शान्ति कहाँ ? अभिमन्यु के वध के शोक से समान दुःख वाली सुभद्रादेवी और द्रौपदी किसी तरह केवल सान्त्वना दे रही हैं।

**राक्षसी**—रुधिरप्रिय, यह हाथी के सिर के कपाल में रक्खे हुए हृदय के माँस रूपी व्यञ्जन (स्वादिष्ट भोजन) को ले। रुधिर-रूपी आसव को पी।

**राक्षस**—(वैसा करके) बसागन्धे, तो तूने रुधिर और कलेजी कितनी एकत्रित कर ली है।

**राक्षसी**—अरे ! रुधिरप्रिय, पहले सञ्चित को तू जानता ही है। नये इकट्ठे किये के विषय में सुन। भगदत्त के रुधिर का एक घड़ा, सिन्धुराज (जयद्रथ) की चर्बी के दो घड़े और द्रुपद, मत्स्यदेशाधिप, भूरिश्रवा, सोमदत्त वाल्हीक प्रमुख राजाओं को दूसरे साधारण पुरुषों के रुधिर, चर्बी और माँस के मुँह बन्द किये एक हजार घड़े मेरे घर में हैं।

**राक्षस**—(संतोष के साथ आलिङ्गन करके) ठीक ! चतुर गृहिणी, ठीक तेरे इस चतुर गृहिणी होने से और स्वामिनी हिडिम्बा देवी की व्यवस्था ने मेरा जीवनभर का दारिद्रय नष्ट कर दिया है।

**राक्षसी**—रुधिरप्रिय, स्वामिनी ने कैसी व्यवस्था की है ?

**राक्षस**—वसागन्धा, आज स्वामिनी हिडिम्बा देवी ने मुझे बड़े आदर से बुलाकर आज्ञा दी है—'रुधिरप्रिय, आज से तू युद्ध-क्षेत्र में आर्यपुत्र भीमसेन के पीछे-पीछे घूमेगा।' इसलिये उसके मार्ग पर चलने वाले मेरे लिये, मरे हुए मनुष्यों के रुधिर की नदी के दर्शन से जिसकी भूख और प्यास नष्ट हो जायेगी यहीं स्वर्गलोक हो जायेगा। तू भी निश्चित होकर रुधिर और चर्बी से (भरे) हजारों घड़े इकट्ठे कर ले।

---

वसागन्धे कुतोऽस्या उपशाम्यति। कपाटमग्रमांसं चानीतम् तत्खादय। वसागन्धे अथ किंप्रभूतं त्वयारुधिरं वसा मांसं च संचितम्। अत्र किं कियत्। प्रभूतमुपचितम्। भगदत्तशोणितैः कुम्भः सिन्धुराजवसाभिः कण्डमन्येषां च द्रुपदसुतमत्स्याधिपभूरिश्रवः सोमदत्तबाल्हीकप्रमुखाणां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणां रुधिरमांसैर्घटशतानि असंख्यातानि सन्ति मे गृहे। अत्र प्राकृत इतरजनः। अत्र संविभागो नियोगः। अज्जुणकेण इति पाठे

हिडिम्बादेवीये शबहुमाणं शद्दाविअ आणत्ते जह लुहिलप्पिआ अजप्पहुदि तुए अज्जउत्तस्स भीमशेणश्श पिट्ठदोणु पिट्ठं शमले आहिण्डिदव्व त्ति। ता तश्श अनुमग्गगामिणो हअमाणशशोणिअणईदशणप्पणट्ठबुमुक्खापिवाशश्श इम एव्व मे शग्गलोओ हुवीअदि। तुमं वि वीशद्धा भविअ लुहिलवशाहिं कुम्भशहश्शं शंचेहि।]

राक्षसी—रुधिरप्रिय, किंनिमित्तं कुमारभीमसेनस्य पृष्ठतोऽनुपृष्ठमाहिण्ड्यते। [लुहिलप्पिआ, किंणिमित्त कुमालभीमशेणश्श पिट्टदोणुपिट्ठं आहिण्डीअदि।]

राक्षसः—वसागन्धे, तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम्। तच्चास्माभीराक्षसैरनुप्रविश्य पातव्यमिति। [वसागन्धे, तेण हि शामिणा विओदलेण दुश्शाशणश्श लुहिलं पादुं पडिण्णादम्। तं च अह्म हिं लक्खशेहिं अणुप्पविशिअ पादव्वंत्ति।]

राक्षसी—(सहर्षम्) साधु, स्वामिनी, साधु। सुसंविधानो मे भर्ता त्वया कृतः। [शाहू शामिणीए शाहु। शुशंविहाणे भे भत्ता तुए किदे।]

(नेपथ्ये महान्कलकलः उभावाकर्णयतः)

राक्षसी—(आकर्ण्य ससंभ्रमम्) अरे रुधिरप्रिय, किं नु खल्वेष महान्कलकलः श्रूयते। [अले लुहिलपिआ, किं णु क्खु एशे महन्ते कलअले शुणअदि।]

राक्षसः—(दृष्ट्वा) वसागन्धे, एष खलु धृष्टद्युम्नेन द्रोणः केशेष्वाकृष्यासिपत्रेण व्यापाद्यते। [वशागन्धे एशे क्खु धिट्टज्जुण्णेण दोणे केशेशु आकट्टिअ अशिवत्तेण वावादीअदि।]

राक्षसी—(सहर्षम्) रुधिरप्रिय एहि। गत्वा द्रोणस्य रुधिर पिवावः। [लुहिलप्पिआ, एहि। गच्छिअ दोणश्श लुहिल पिवह्म।]

राक्षसः—(सभयम्) वसागन्धे, ब्राह्मणशोणित खल्वेतद्। गलं दहद्दहत्प्रविशति। तत्किमेतेन। [वशागन्धे, ब्रह्मणशोणिअ क्खु एदं। गलअं दहन्ते दहन्ते पविशदि। ता किं एदिणा।]

(नेपथ्ये पुनः कलकलः)

राक्षसी—रुधिरप्रिय, पुनरप्येष महान्कलकलः श्रूयते। [लुहिलप्पिआ पुणोवि एशे महन्ते कलअले शुणीअदि।]

राक्षसः—(नेपथ्याभिमुखमवलोक्य) वसागन्धे, एष खल्वश्वत्थामा आकृष्टा-

**राक्षसी**—रुधिरप्रिय, कुमार भीमसेन के पीछे-पीछे किस कारण घूमते हो ?

**राक्षस**—वसागन्धा, स्वामी वृकोदर (भीमसेन) ने दुःशासन का रुधिर पीने की प्रतिज्ञा कर रक्खी है। वह (कुमार भीमसेन के शरीर में) प्रविष्ट होकर हम राक्षसों को ही पीना होगा।

**राक्षसी**—(हर्ष के साथ) धन्य हो, स्वामिनी धन्य हो। आपने मेरे पति के लिये अच्छी व्यवस्था कर दी हैं।

(नेपथ्य में तीव्र कलकल ध्वनि होती है। दोनों सुनते हैं)

**राक्षसी**—(सुनकर घबराहट के साथ) अरे रुधिरप्रिय, यह कैसा तीव्र कलकल शब्द सुनाई दे रहा है ?

**राक्षस**—(देखकर) वसागन्धा, यह द्रोण धृष्टद्युम्न द्वारा केश खींचकर तलवार से मारा जा रहा है।

**राक्षसी**—(हर्ष से) रुधिरप्रिय, आओ। चलकर द्रोण का रुधिर पीयेंगे।

**राक्षस**—(भय से) वसागन्धा यह ब्राह्मण का रुधिर है। गले को जलाता हुआ अन्दर जाता है। इसलिये इससे क्या (लाभ) ?

(नेपथ्य में फिर कलकल ध्वनि होती है)

**राक्षसी**—रुधिरप्रिय यह पुनः तीव्र कलकल शब्द सुनाई दे रहा है।

**राक्षस**—(नेपथ्य की ओर देखकर) वसागन्धा, यह अश्वत्थामा तलवार

---

अद्यतनकेन। एतत्कालीनेत्यर्थः। अरे रुधिरप्रिय कीदृशः स्वामिन्या हिडिम्बादेव्या संविभागः कृतः। पुत्र रुधिरप्रिय अद्यप्रभृतित्वयानाथभीमसेनस्य पश्चात्समर आहिण्डितव्यमिति। ततस्तस्य मार्गानुगामिनो हतमानुषशोणितनदी दर्शनेन प्रणष्टा मे बुभुक्षा पिपासा च। त्वमपि विश्वस्ता भूत्वा रुधिरं वसां मांसं च संचेष्यसीतीहैव सुरलोको भविष्यतीति अत्र। बुभुक्षा भोक्तुमिच्छा। विश्वस्ता विश्वासवती। सुसंविभागो मम भर्ता कृतः। अरे रुधिरप्रिय रुधिरप्रिय उत्तिष्ठोत्तिष्ठ कुतः खल्वेष महान्कलकलः श्रूयते। तदलं ममैतेन। अरे रुधिरप्रिय रुधिरप्रिय उत्तिष्ठोत्तिष्ठ। पुनरप्येष महान्कलकलः श्रूयते। वसागन्धे एष खल्वश्वत्थामाकृष्टासिपत्र इतः समरभूमिमवतरति। कदाचिद्द्रुपदसुतरोषेणास्मान्राक्षसान्प्रेक्ष्य व्यापादयिष्यति। तदेहि पलायावहे। अत्रासिपत्रः खड्गः

सिपत्र इत एवागच्छति। कदाचिद् द्रुपदसुतरोषेणाऽऽवामपि व्यापादयिष्यति तदेहि। अतिक्रमावः। [वशागन्धे, एशे क्खु अश्शत्थामे आकट्टिदाशिवत्ते इदो एव्व आअच्छदि। कदावि दुवदशुलोशेण अह्मे वि वावादइश्शइ। ता एहि। अतिक्कमह्म।

(इति निष्क्रान्तौ)

**इति प्रवेशकः।**

**(ततः प्रविशत्युत्खातखड्गः कलकलमाकर्णयन्नश्वत्थामा)**

**अश्वत्थामा—**

महाप्रलयमारुतक्षुभितपुष्करावर्तक—
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥४॥

(विचिन्त्य) **ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रान्तमर्यादेन परिकोपितस्तातः समुल्लङ्घ्य शिष्यप्रियतामात्मप्रभावसदृशमाचेष्टते। तथाहि—**

यद् दुर्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे।
रामाल्लब्धसमस्तहेतिगुरुणो वीर्यस्य यत्साम्प्रतम्।

---

द्रुपदसुतो धृष्टद्युम्नः। एवं करवावः।

प्रवेशक इति। हीनाभ्यामेव पात्राभ्यामङ्कादौ यत्प्रवर्तते। प्रवेशकः स विज्ञेयः शौरसेन्यादिभाषया। इति भरतः।

महाप्रलयेति। [अद्य पुरः अग्रेवर्तमानः **समरमेवोधिस्तस्यायं** **रवः** कुतः। कीदृशः। महान् यः प्रलयमरुतः तेन। यद्वा महाप्रलये यः मारुतस्तेन। क्षुभिताः पुष्करावर्तकास्तेषां प्रचण्डं घनं च यद्गर्जितं तस्य प्रतिरवः प्रतिशब्दस्तस्यानुकरोतीति तत्सदृश इत्यर्थः। पुष्करावर्तको मेघविशेषः। घनं निविडम्

खींचे इधर ही आ रहा है। कहीं द्रुपद के पुत्र पर आये हुए क्रोध से हमें भी मार डाले। इसलिये आओ बचकर निकल चलें।

(दोनों निकल जाते हैं)

**प्रवेशक समाप्त**

(तत्पश्चात् तलवार उठाये और कलकल ध्वनि सुनते हुए अश्वत्थामा)
(प्रवेश करता है)

**अश्वत्थामा**—

आज सामने युद्धरूपी समुद्र से वार-वार यह, महा-प्रलय के समय वायु से चलायमान पुष्कर और आवर्तक नाम के मेघों के तीव्र और गम्भीर गर्जन की प्रतिध्वनि का अनुकरण करने वाला, कर्णकटु और पृथ्वी तथा आकाश के मध्यवर्ती भाग (अन्तरिक्ष) रूपी गुहा को ढक देने वाला, अभूतपूर्व शब्द क्यों (उठ रहा है?) ॥४॥

(सोचकर) निश्चय ही यौवन के मद से मर्यादा का उल्लङ्घन कर देने वाले अर्जुन या सात्यकि का भीमसेन द्वारा क्रुद्ध किये गये पिताजी शिष्य-प्रेम को त्यागकर अपने पराक्रम के अनुरूप कर्म कर रहे हैं। क्योंकि—

जो (कर्म) दुर्योधन के प्रति प्रेम के योग्य है, जो (कर्म) शस्त्र उठा लेने पर उचित है, जो (कर्म) परशुराम से प्राप्त समस्त शास्त्रों के कारण महान् पराक्रम के योग्य है, और जो (कर्म) सब धनुर्धारियों के अधिपति के क्रोध के

---

**अनुकारी** सदृशः। **श्रवणभैरवः** कर्णकटुः। **स्थगितं** पिहितम्। द्यावापृथिव्यो-रन्तरं रोदः। तदेव कन्दरं तस्य वा कन्दरं मध्यम्। रोदश्च रोदसी चैव दिवि भूमौ पृथक्पृथक्। इत्यमरः। स्थगितं रोदस्योः कन्दरं येन]। **अभूतपूर्वः** न पूर्वं भूत इत्यर्थः। सुप्सुपेति समासः ॥४॥

**आचेष्टते** करोति।

**यद्दुर्योधनेति** यदिति सर्वत्र यच्छब्देनाग्रे वक्ष्यमाणं कर्माभिधीयते। **पक्षपातो** गौरवम्। [अस्त्रग्रहे अस्त्रे गृहीते यत्कर्तुमुचितम् रामाल्लब्धाः समस्ता हेतयः समस्तान्यस्त्राणि ताभिर्गुरु दुर्भरम्] रामात्परशुरामात् हेतिरस्त्रम्।

लोके सर्वधनुष्मतामधिपतेर्यच्चानुरूपं रुषः
प्रारब्धं रिपुघस्मरेण नियतं तत्कर्म तातेन मे ॥५॥

(पृष्ठतो विलोक्य) तत्कोऽत्र । रथमुपनयतु । अथवाऽलमिदानीं मम रथप्रतीक्षया । सशस्त्र एवास्मि सजलजलधरप्रभाभासुरेण सुप्रग्रहविमलकलधौतत्सरुणाऽमुना खड्गेन । यावत्समरभुवमवतरामि । (परिक्रम्य वामाक्षिस्पन्दनं सूचयित्वा) आः कथं ममापि नामाश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्याऽनिमित्तानि समरगमनविघ्नमुत्पादयन्ति । भवतु, गच्छामि । (सावष्टम्भं परिक्रम्याग्रतो विलोक्य च) कथमवधीरितक्षात्रधर्माणामुज्झितसत्पुरुषोचितलज्जावगुण्ठनानां विस्मृतस्वामिसत्कारलघुचेतसां द्विरदतुरङ्गमचरणचारिणामगणितकुलयशःसदृशपराक्रमव्रतानां रणभूमेः समन्तादक्रामतामयं महान्नादो बलानाम । (निरूप्य) हा धिक्कष्टम् । कथमेते महारथाः कर्णादयोऽपि समरात्पराङ्मुखा भवन्ति । कथं नु तताधिष्ठितानामपि बलानामियमवस्था भवेत । भवतु संस्तम्भयामि । भो भोः कौरवसेनासमुद्रवेलापारपालनमहामहीधरा नरपतयः कृतं कृतममुना समरपरित्यागसाहसेन—

---

गुरुणोऽधिकस्य । सांप्रतं युक्तम् । धनुष्मतां । प्रशस्तधनुर्धराणाम् अधिपतेस्तस्य [रुषः] रोषस्य यदनुरूपमित्यन्वयः । [रिपूणां] घस्मरो भक्षकः [तेन] । भक्षको भस्मरोऽद्मरः इत्यमरः ॥५॥

[सजलः यः जलधरस्तस्येव प्रभा तया] भासुरेण दीप्तेन । भञ्जभासमिदो घुरच् इति घुरच्प्रत्ययः । सुप्रग्रहः सुष्ठु ग्रहणं रश्मिर्वा [यस्य] । हयादिरश्मौ च प्रग्रहःसंग्रहेऽपि च इति विश्वः । तादृशः विमलं निर्मलं यत्कलधौतं तस्य त्सरुर्यस्य तेन । कलधौतं सुवर्णम् त्सरुः खड्गादिमुष्टौ स्यात् इत्यमरः । नाम संभावनायाम् । अनिमित्तानीति कर्तृपदम् [समरमेव महोत्सवः तेन प्रमोदस्य निर्भरः यस्य । तातविक्रमदर्शने लालसा यस्य अधधीरितस्तिरस्कृतः क्षत्रस्यायं क्षात्रा धर्मो युधि स्थैर्येणावस्थानं तद्रूपायैः] [उज्झितं त्यक्तं लज्जैवावगुण्ठनमुपरिवस्त्रं यैस्तेषाम् । विस्मृतः स्वामिसत्कारस्तेन लघु चेतो येषाम् ।

अनुरूप है, शत्रुओं के भक्षक पिता ने निश्चित रूप से (आज) वही कर्म प्रारम्भ कर दिया है ॥५॥

(पीछे की ओर देखकर )—यहाँ कौन है ? रथ लाओ। अथवा अब मुझे इस रथ की प्रतीक्षा नहीं करनी चाहिए। जल से भरे मेघ की क्रान्ति के समान चमकने वाले और अच्छी प्रकार पकड़ने योग्य तथा निर्मल सुवर्ण निर्मित मूठ वाले इस खड्ग से शस्त्र-सज्जित हूँ ही। तब युद्धक्षेत्र में उतरता हूँ। (घूमकर और वायें नेत्र की फड़कन को सूचित करके ) ओह ! मुझ अश्वत्थामा के लिए भी जिसे युद्ध रूपी महोत्सव का अत्यधिक हर्ष है और जिसे पिता के पराक्रम को देखने की तीव्र अभिलाषा है, ये अपशकुन युद्ध में जाने में विघ्न उत्पन्न कर रहे है। अच्छा, जाता हूँ। (अकड़ के साथ घूमकर और देखकर) क्षात्रधर्म की उपेक्षा करने वाली, सज्जनोचित लज्जा के आवरण को त्याग देने वाली स्वामी द्वारा किये गये सत्कार को भुला देने के कारण क्षुद्र चित्त वाली, कुल एवं ख्याति के अनुरूप पराक्रम-व्रत की चिन्ता न करने वाली, युद्ध-क्षेत्र से चारों ओर भाग खड़ी होने वाली और हाथी, घोड़ों तथा पदातियों की सेनाओं का यह महान् कोलाहल क्यों है ? (देखकर) ओह ! धिक्कार है ! ये कर्ण आदि महारथी भी युद्ध से क्यों भाग रहे हैं ? पिता से संचालित होने पर भी सेनाओं की यह दशा कैसे हो सकती है ? अच्छा, मैं (इन्हें) रोकता हूँ। हे कौरव-सेना रूपी समुद्र के तट की रक्षा के कार्य में विशाल पर्वतों के समान् राजा लोगों, युद्ध से पलायन के इस दुष्कृत्य से बस करो।

---

द्विरदैः तुरंगमैश्चरणैश्च चरन्तीति च्छीलानान्। चारीति ताच्छीलिको णिनिः। [अगणितं कुलस्य यशः तस्य सदृशं पराक्रम एव व्रतं यै तेषाम्।] अपक्रामतां पलायमानानाम्। अपक्रमोऽपयानं स्यात् इत्यमरः। हा हा शोकेऽपि निन्दायाम् इति कौरवसेना एव समुद्रस्तस्य वेलामर्यादास्थितस्तस्याः परिपालने महामहीधराः।] वेला तत्तीरनीरयोः इत्यमरः। महीधरो गिरिः। कृतं निष्फलम्। कृतं क्लीवं तु निष्फले इति विश्वः। [कृतमलं मा कुरुतेत्यर्थः।]

यदि समरमपास्य नास्ति मृत्यो—
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वे ॥६॥

अपि च—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णाऽलं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्याऽवकाशः ॥७॥

( नेपथ्ये )

कुतोऽद्यापि ते तातः ।

अश्वत्थामा—(श्रुत्वा) किं ब्रूथ—कुतोऽद्यापि ते तातः इति । (सरोषम्) आः क्षुद्राः समरभीरवः, कथमेवं प्रलपतां वः सहस्रधा न दीर्णमनया जिह्वया ।

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पाप पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥८॥

(प्रविश्य संभ्रान्तः सप्रहारः)

सूतः— परित्रायतां परित्रायतां कुमारः । (इति पादयोः पतति) ।

---

यदीति अपास्य त्यक्त्वा । मृत्योर्मरणाद्यमाद्वा । इतः समरात् अन्यतोऽन्यत्र । अथ पक्षान्तरे । मुधा विफलम् ॥६॥

अस्त्रेति । अस्त्रमेव ज्वाला तेनावलीढ आक्रान्ताः प्रतिबलजलधिस्तस्य मध्ये और्वायमाणे वडवानल इवाचरति सति । संभ्रमेण भयेन । हार्दिक्यो योधविशेषः । शङ्कां भयं मुञ्च । इह श्लोके युक्तिरलङ्कारः । अर्थावधारणं यत्तु

यदि युद्ध का त्याग करके मृत्यु का भय न रहे, तब तो यहाँ से अन्यत्र जाना उचित भी हो सकता है, परन्तु जब प्राणी की मृत्यु अवश्यम्भावी है तो (अपनी) कीर्ति को व्यर्थ क्यों कलङ्कित कर रहे हो ? ॥६॥

और भी,

शस्त्रों रूपी ज्वालाओं से व्याप्त शत्रु-सेना रूपी समुद्र के मध्य वडवानल के समान, समस्त उत्तम धनुर्धारियों के गुरु, मेरे पिता के सेनापति रहते हुए हे कर्ण, घबराहट से बस करो; हे कृप, युद्ध-भूमि में जाओ; हे हार्दिक्य, भय त्याग दो। धनुष को सहाय रूप में धारण करने वाले (मेरे) पिता के युद्ध-संचालन का भार धारण करने पर भय का अवकाश क्या हो सकता है ? ॥७॥

( नेपथ्य में )

अब तुम्हारे पिता कहाँ हैं ?

**अश्वत्थामा**—(सुनकर) क्या कह रहे हो—अब तुम्हारे पिता कहाँ हैं ? (क्रोध से) ओह ! नीच युद्ध-भीरुओं, इस तरह प्रलाप करते हुए तुम्हारी यह जीभ हजार टुकड़े क्यों नहीं हो गई ?

अपनी ज्वलनशील किरणों से संसार को जला डालने के लिए बारह आदित्य उदित नहीं हुए; सात-सात प्रकार की सात (७×७=४९) वायु प्रत्येक दिशा में नहीं चलीं; और पुष्कर एवं आवर्तक आदि मेघों ने आकाश को आच्छादित नहीं किया; (तब) हे पापियों, वीर्य की राशि मेरे पिता के विषय में अनिष्ट बात कैसे कह रहे हो ? ॥८॥

(प्रवेश करके घबराया हुआ तथा चोटें लगा हुआ)

**सूत**—बचाइये, कुमार बचाइये। (पैरों पर गिरता है)।

---

प्रमाणाद्युक्तिरुच्यते। इति भरतः। अन्यदीयप्रौढ्यतिशयरूपो गर्भसंधिरयम्। यदाह—स्वीयान्यदीयभेदेन प्रौढिवाक्यमुदाहृतिः ॥७॥

**वो** युष्माकम्।

**दग्धुमिति**। [दहनात्मकाः किरणा दहनकिरणाः तैः] **दहनकिरणैरग्निकरैः**। **न वाता न** गतिमन्तः। वाता इति वा गतिगन्धनयोः। क्तः। **सप्तधा** सप्तप्रकारेण भिन्नाः सप्त। तथा चोनपञ्चाशत्। [वाताः वा दिशि दिशि न वाता]। **पापं** मरणरूपम्। **हे पापाः** पापिष्ठाः ॥८॥

अश्वत्थामा—(विलोक्य) अये, कथं तातस्य सारथिरश्वसेनः । आर्य, ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि । किं मत्तः परित्राणमिच्छासि ।

सूतः—(उत्थाय सकरुणम्) कुतोऽद्यापि ते तातः ।

अश्वत्थामा—(सावेगम्) किंतात एव नास्ति ।

सूतः—अथ किम् ।

अश्वत्थामा—हा तात । (इति मोहमुपगतः) ।

सूतः—कुमार, समाश्वसिहि । समाश्वसिहि ।

अश्वत्थामा—(लब्धसंज्ञः सास्रम्) हा तात, हा सुतवत्सल, हा लोकत्रयैकधनुर्धर, हा जामदग्न्यास्त्र सर्वस्वप्रतिग्रहप्रणयिन्, क्वासि । प्रयच्छ मे प्रतिवचनम् ।

सूतः—कुमार, अलमत्यन्तशोकावेगेन । वीरपुरुषोचितानां विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव ।

अश्वत्थामा—(अश्रूणि विमुच्य) आर्य, कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामाऽस्तमुपगतः ।

किं भीमाद्गुरुदक्षिणां गुरुगदाद्भीमप्रियः प्राप्तवान् ।

सूतः—शान्तं पापम् । शान्तं पापम् ।

अश्वत्थामा—

अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ।

सूतः—कथमेवं भविष्यति ।

अश्वत्थामा—

गोविन्देन सुदर्शनस्य नियतं धारापथं प्रापितः ।

---

[जमदग्नरपत्यं पुमान् जामदग्न्यः परशुरामस्तस्यास्त्राण्येव सर्वस्वं तस्य प्रतिग्रहे स्वीकरे प्रणयो विद्यते अस्य तत्संबुद्धिः । विपत्ति मरणम् । तस्य पितुरनुरूपेण सदृशेन । [प्रतिग्रहो ग्रहणम्] ।

किं भीमादिति शिष्याद्भीमात् । गुरुगदामेव गुरुदक्षिणाम् [गुरुगदादिति पाठे गुर्वी भीषणा महती वा गदा यस्य तस्मात् ।] भीमः प्रियो मित्रं यस्य स तातः । अन्तेवासी शिष्यः । तद्विषये दयालुर्दयायुक्तः । उज्झितस्त्यक्तः नयो

**अश्वत्थामा**—(देखकर) अरे ! पिता का सारथि अश्वसेन ? आर्य तीनों लोकों की रक्षा करने में समर्थ (मेरे पिता) के सारथि हो। क्या मुझसे रक्षा चाहते हो ?

**सूत**—(उठकर करुणापूर्वक) अब तुम्हारे पिता कहाँ ?

**अश्वत्थामा**—(आवेग के साथ) क्या पिता ही नहीं रहे ?

**सूत**—और क्या ?

**अश्वत्थामा**—हाय तात ! (यह कहकर मूर्छित हो जाता है)।

**सूत**—कुमार, धैर्य रखिये, धैर्य रखिये।

**अश्वत्थामा**—(चेतना प्राप्त करके आँसू भरकर) हाय तात ! हाय पुत्र-वत्सल ! हाय तीनों लोकों में अद्वितीय धनुर्धर ! हाय परशुराम के अस्त्र-रूपी धन के लेने में प्रेम रखने वाले ! तुम कहाँ हो ? मुझे प्रत्युत्तर दीजिए।

**सूत**—कुमार, अत्यन्त शोक के आवेग से बस करो। पिता के वीर पुरुष के योग्य मृत्यु पाने पर तुम भी उनके अनुरूप ही पराक्रम से शोक-सागर को तर कर सुखी होओ।

**अश्वत्थामा**—(आँसू बहाकर) आर्य बतलाओ, बतलाओ—कैसे (अधिक) भुज-बल का सागर, पिता भी कैसे मृत्यु को प्राप्त हो गया ?

क्या भीम से प्रेम करने वाले (पिता) ने भारी गदा वाले भीम से गुरु-दक्षिणा पा ली है ?

**सूत**—पाप शान्त हो, पाप शान्त हो।

**अश्वत्थामा**—(तो) उचित आचार का परित्याग करके जिष्णु (अर्जुन) ने शिष्य पर दयालु (पिता) को अभिभूत कर दिया है ?

**सूत**—ऐसा कैसे होगा ?

**अश्वत्थामा**—(तो) निश्चय ही गोविन्द (कृष्ण) ने सुदर्शन की धारा के पथ को प्राप्त करा दिया ?

---

[नीतिमार्गो गुरौभक्तिरेवोचिता न तु नृशंसत्वमित्येतद्रूपः येन।] जिष्णुणा

सूतः—एतदपि नास्ति ।

अश्वत्थामा—

शङ्केनापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥९॥

सूतः—कुमार,

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये ।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदास्य विहितं रिपुणाऽतिघोरम् ॥१०॥

अश्वत्थामा—किं पुनः कारणं शोकस्याऽस्त्रपरित्यागस्य वा ।

सूतः—ननु कुमार एव कारणम् ।

अश्वत्थामा—कथमहमेव नाम ।

सूतः—श्रूयताम् । (अश्रूणि विमुच्य) ।

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वाऽसौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥११॥

अश्वत्थामा—हा तात, हा सुतवत्सल, हा वृथामदर्थपरित्यक्तजीवित, हा शौर्यराशे, हा शिष्यप्रिय, हा युधिष्ठिरपक्षपातिन् । (इति रोदिति)

सूतः—कुमार, अलमत्यन्तपरिदेवनकार्पण्येन ।

---

अर्जुनेन । आसादितः मारित इत्यर्थः । नियतं निश्चितम् । सुदर्शनो हरिचक्रम् । चक्र सुदर्शनः इत्यमर । अन्यतोऽन्यस्मात् । खलु निश्चये ॥९॥

एतेऽपीति । एते भीमार्जुनकृष्णाः । संख्ये संग्रामे धूर्जटेर्हरस्य [इव कुपितस्य तस्य तुलामुण्यान्ति किम् । नैवेत्यर्थः हृदयेनेत्याचार्यविशेषणं । [यदा तु शोकेनोपरुद्धं व्याप्तमिति यावत् हृदयं यस्य तेन आचार्येण शस्त्रं त्यक्तं तदा रिपुणा अस्य अतिघोरं विहितम् ।] अस्याचार्यस्य । अतिघोरं विनाशः । अस्त्रं काण्डादि शस्त्रं खड्गादि । इत्यनयोर्विशेषः । असु क्षेपणे । शसु हिंसायाम् । औणादि कष्ट्रन प्रत्ययः ॥१०॥

**सूत**—यह भी नहीं है।

**अश्वत्थामा**—इनसे अतिरिक्त किसी चौथे से मैं पिता की विपत्ति की आशङ्का नहीं करता ॥९॥

**सूत**—कुमार, क्या वे सब लोग भी, शिव के समान हाथ में महान् अस्त्र धारण करने वाले, कुपित हुए उसका युद्ध में सामना कर सकते हैं? लेकिन जब शोक से आक्रान्त हृदय वाले (आपके पिता) ने शस्त्र त्याग दिया, तब शत्रु ने इसके प्रति अतिदारुण कर्म किया ॥१०॥

**अश्वत्थामा** - लेकिन शोक अथवा शस्त्र-त्याग का क्या कारण था?

**सूत**—बस, कुमार ही कारण थे।

**अश्वत्थामा**—मैं ही कैसे?

**सूत**—सुनिये। (आँसू बहाकर)

**सत्यवादी** –पृथा के पुत्र युधिष्ठिर) ने 'अश्वत्थामा मारा गया, यह स्पष्ट कहकर (वाक्य के) शेष (भाग) में 'गज' यह पद धीरे से कहा। उसे सुनकर उस राजा (युधिष्ठिर) के विश्वास से पुत्र को प्रेम करने वाले इसने युद्ध-भूमि में शस्त्र गिरा दिये और साथ ही आँसू भी गिराये ॥११॥

**अश्वत्थामा**—हाय तात! हाय पुत्रवत्सल, हाय! व्यर्थ ही मेरे कारण प्राण त्यागने वाला, हाय वीर्य-राशि! हाय युधिष्ठिर का पक्षपात करने वाले। (इस प्रकार विलाप करके रोता है)।

**सूत**—कुमार, अत्यधिक विलाप और कायरता से बस करो।

---

अश्वत्थामेति। पृथासूनुना युधिष्ठिरेण। स्वैरमल्पं [अस्पष्टमित्यर्थः]। शेषे वचनस्येति शेषः। किल निश्चये। व्याहृतमुक्तम्। असावाचार्यः दयितः प्रियः तनयः पुत्रो यस्य स तथा। प्रत्ययात्प्रतीतेः। आजौ संगामे। शस्त्राणि मुमोच अपि तुल्यं धनुःसमकालं नयनसलिलं च मुमोचेत्यन्वयः। इहाभूताहरण-रूपः गर्भसन्धिः। यदाह—उक्तं युक्तं तु उद्वाक्यमभूताहरणं तु तत्। इति। अश्वत्थामा गजनाम् ॥११॥

अश्वत्थामा—

श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात त्वया सह शरैरसवो विमुक्ताः ।
जीवाम्यहं पुनरयं भवता वियुक्तः
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥१२॥

(इति मोहमुपगतः)

सूतः—समाश्वसितु समाश्वसितु कुमारः ।

(ततः प्रविशति कृपः)

कृपः—(सोद्वेगं निःश्वस्य)

धिक् सानुजं कुरुपतिं धिगजातशत्रुं
धिग् भूपतीन्विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥१३॥

तत्कथं नु खलु वत्सं द्रक्ष्याम्यश्वत्थामानम् । अथवा हिमवत्सारगुरुचेतसि ज्ञानलोकस्थितौ तस्मिन्न खलु शोकावेगमहमाशङ्के । किं तु पितुः परिभवमीदृशमुपश्रुत्य न जाने किं व्यवस्यतीति । अथवा—

एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते ।
केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥१४॥

---

[युधिष्ठिरे पक्षपातो विद्यते अस्य । कार्पण्येन वैक्लव्येन । प्राकृतजनवच्छोकवशो मा भूरित्यर्थः ।]

श्रुत्वेति [मृषा मिथ्या मम वधं श्रुत्वा ।] असवः प्राणाः ॥१२॥

ततः प्रविशति कृप इति । अत्र सूचनाव्यतिरेकेणैव प्रवेश इति प्रवेशे सूचना व्यभिचरतीत्यवधेयम् ।

धिक्सानुजमिति । सानुजमिति धिग्योगे द्वितीया । जातशत्रुं युधिष्ठिरम् ।

अश्वत्थामा—हे तात, पुत्र को प्रेम करने वाले आपने मेरे वध की झूठी बात सुनकर वाणों के साथ (ही) प्राण भी त्याग दिये। लेकिन यह मैं आपसे वियुक्त होकर भी जीवित हूँ इसलिये मुझ निर्दयी पर आपका पक्षपात व्यर्थ ही था ॥१२॥

(यह कहकर मूर्छित हो जाता है)

सूत—कुमार धैर्य रखिये, धैर्य रखिये।

(तत्पश्चात् कृप प्रवेश करता है)

कृप—(उद्वेगपूर्वक लम्बा साँस लेकर)

अनुजों सहित कुरुपतियों को धिक्कार है; अजातशत्रु (युधिष्ठिर) को धिक्कार है; राजाओं को धिक्कार है; निरर्थक शस्त्र धारण करने वाले हमको धिक्कार है; जिन्होंने चित्र-लिखित के समान तब द्रुपद की पुत्री के और आज द्रोण के केश-ग्रहण को देखा है ॥१३॥

तो पुत्र अश्वत्थामा को कैसे देख सकूँगा? अथवा हिमालय के समान बलशाली और उदार चित्त वाले तथा लोकमर्यादा को जानने वाले उस (अश्वत्थामा) में मुझे शोक के आवेग की आशङ्का नहीं करनी चाहिये। किन्तु पता नहीं कि पिता के अनुचित अपमान को सुनकर वह क्या कर डाले? अथवा—

एक (केश-ग्रहण) का तो पृथ्वी पर यह (महाभारत रूप) भयङ्कर परिणाम है। इस द्वितीय केशग्रहण होने पर निश्चय ही समस्त प्रजा नष्ट हो जायेगी ॥१४॥

---

[विफलानि शस्त्राणि विभ्रतीति तान्] खलु प्रसिद्धौ निश्चये वा। द्रौपद्याः केशग्रहस्तदाद्य द्रोणस्य च यैः [लिखितश्चित्रगतैरिव] वीक्षित इत्यन्वयः ॥१३॥ [हिमवतः सारः] हिमवत्सरो हिमालयबलम्। [तद्वद् गुरु स्थिरं चेतो यस्य।] स्थितिः स्थैर्यम्। [मर्यादा व्यवस्था वा।] तस्मिन्नश्वत्थामनि। व्यवस्यति करोति।

एकस्येति एकस्य [द्रौपद्याः] केशग्रहस्य। तावच्छन्द उपक्रमे। निःशेषिता विनष्टाः। इहाक्षिप्तरूपो गर्भसन्धिः। यदाह—बीजयस्योच्छेदनं यत्तु तदाक्षिप्तमुदाहृतम् ॥१४॥

(विलोक्य) तदयं वत्सस्तिष्ठति । यावदुपसर्पामि । (उपसृत्य ससंभ्रमम्) । वत्स, समाश्वसिहि, समाश्वसिहि ।

अश्वत्थामा—(संज्ञां लब्ध्वा सास्रम्) हा तात, हा सकलभुवनैकगुरो । (आकाशे) युधिष्ठिर, युधिष्ठिर,

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जमनतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषा-
त्सर्वं तदेकपद एव कथं निरस्तम् ॥१५॥

सूतः—कुमार, एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

अश्वत्थामा—(पार्श्वे विलोक्य सबाष्पम्) मातुल, मातुल,

गतो येनाद्य त्वं सह रणभुवं सैन्यपतिना
य एकः शूराणां गुरुसमरकण्डूनिकषणः ।
परिहासाश्चित्राः सततमभवन्येन भवतः
स्वसुः श्लाघ्यो भर्ता क्व नु खलु स ते मातुल गतः ॥१६॥

कृपः—परिगतपरिगन्तव्य एव भवान् । तदलमत्यन्तशोकावेगेन ।

अश्वत्थामा—मातुल, परित्यक्तमेव मया परिदेवनम् । एषोऽहं सुतवत्सलं तातमेवानुगच्छामि ।

कृपः—वत्स, अनुपपन्नं भवद्विधानामिदम् ।

सूतः—कुमार, अलमतिसाहसेन ।

अश्वत्थामा—आर्य शारद्वत,

---

आजन्मन इति । आजन्मनो जननादारभ्य । वितथमसत्यम् । किल प्रसिद्धौ । यत्त्वं जनं द्वेक्षि । द्वेषविषयं करोषि, तत्सर्वं मम भाग्यदोषात् दैवानुकूल्याभावात् । त्वयेति शेषः । कथं निरस्तं दूरीकृतम् ।] ॥१५॥

[शरद्वतः पुत्रः] शारद्वतः कृपः ।

(देखकर) तो यह वत्स अश्वत्थामा खड़ा है। समीप जाता हूँ (समीप जाकर घबराहट के साथ) वत्स, धैर्य रक्खो, धैर्य रक्खो।

अश्वत्थामा—(चेतना पाकर आँसू भरे हुए) हाय तात! हाय सम्पूर्ण संसार के प्रधान गुरु! (आकाश की ओर देखकर) युधिष्ठिर! युधिष्ठिर,

जन्म से लेकर आपने (कभी) झूठ नहीं बोला क्योंकि तुम लोगों से द्वेष नहीं करते हो, इसलिये तुम अजातशत्रु (कहलाते हो); लेकिन मेरे भाग्य के दोष से (तुमने) आचार्य और श्रेष्ठ ब्राह्मण (मेरे) पिता के विषय में यह सब गुण एकदम कैसे छोड़ दिये ॥१५॥

सूत—कुमार, तुम्हारे मामा शारद्वत समीप में खड़े हैं।

अश्वत्थामा—(पार्श्व में देखकर आँसुओं के साथ) मामा, मामा?

जिस सेनापति के साथ आज युद्ध-भूमि में गये थे; जो अकेला ही वीरों की युद्ध की भारी खुजली को मिटा देने वाला था; जिसके साथ हमेशा आपके अनोखे हँसी मजाक हुआ करते थे; आपकी बहन का प्रशंसनीय पति वह हे मामा, कहाँ चला गया? ॥१६॥

कृप—आप सब ज्ञातव्य जानते ही हैं। इसलिये बहुत शोक के आवेग से बस कीजिये।

अश्वत्थामा—मातुल, मैंने विलाप छोड़ ही दिया। अब मैं भी पुत्र-प्रेमी पिता का ही अनुगमन करता हूँ।

कृप—वत्स, आप जैसों के लिये यह उचित नहीं है।

सूत—कुमार, दुःसाहस न करो।

अश्वत्थामा—आर्य शारद्वत,

---

गत इति। येन सैन्यपतिना सह अद्य त्वं रणभुवं गतः। यः एकः शूराणां। गुर्वी या समरस्य युद्धस्य कण्डूः भुजयोः कण्डूतिस्तस्या निकषणः। कण्डूनिकषण कण्डूनिवारणः [येन सह भवतः चित्राः। परिहासा नर्मभाषणानि सततम् अभवन्। हे मातुल सः ते स्वसुर्भगिन्याः श्लाघ्यो भर्ता। क्व नु कुत्र नु खलु गतः। खलुः प्रश्ने ॥१६॥

परिगतं ज्ञातं परिगन्तव्यं ज्ञातव्यं येन स तथा। परिवेदितं विलापः।

मद्वियोगभयात्तातः परलोकमितो गतः ।
करोमि विरहं तस्य वत्सलस्य कथं पितुः ॥१७॥

कृपः वत्स, यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरौ लोकद्वयेऽप्यनुवर्तनीया इति । पश्य—

निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः ।
तस्योपकारे शक्तस्त्वं किं जीवन्किमुतान्यथा ॥१८॥

सूतः—आयुष्मन्, यथैव मातुलस्ते शारद्वतः कथयति तत्तथा ।

अश्वत्थामा—आर्य, सत्यमेवेदम् । किं त्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान्धारयितुम् । तद्गच्छामि तमेवोद्देशं यत्र तथाविधमपि पितरं द्रक्ष्यामि (उत्तिष्ठन् खड्गमालोक्य विचिन्त्य) कृतमद्यापि शस्त्रग्रहणविडम्बनया । भगवन् शस्त्र,

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥१९॥

(इति उत्सृजति)

(नेपथ्ये)

भो भो राजानः, कथमिह भवन्तः सर्वे गुरोर्भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमपेक्षन्ते ।

---

मदिति । अविरहं समाजं [सान्निध्यमित्यर्थः] ॥१७॥

लोकद्वये इहलोके परलोके च [अनुवर्तनीया आनुकुल्येनानुसर्तव्याः इहलोकस्थिते पितरि सादृशचरणेन परलोकगते श्राद्धादिकर्मणेत्यर्थः ।]

निवापेति । निवापः पितृदानं स्यात् इत्यमरः । निवापाञ्जलिर्जलाञ्जलि [तस्य तर्पणादिषु दानेन] केतनैर्गृहैः [केतनैः ब्रह्मभोजैरित्यर्थः साधीयान् । अथ केतनं कृत्ये । इत्यमरः । श्राद्धकर्मभिः च तस्योपकारे त्वं किं जीवन् शक्तः ।] किमुतान्यथाऽजीवन्वा शक्तः । अपि तु जीवता जलादिदानमेव

(प्रविश्य)

कञ्चुकी---आज्ञापयतु देवः ।

युधिष्ठिरः—देवस्य देवकीनन्दनस्य बहुमानद्वत्सस्य मे विजयमङ्गलाय प्रवर्त्यन्तां तदुचिताः समारम्भाः ।

कञ्चुकी—यदाज्ञापयति देवः । (सोत्साह परिक्रम्य) भो भोः सविधातृणां पुरः सराः, यथाप्रधानमन्तर्वेश्मिकाः, दौवारिकाश्च, एष खलु भुजबलपरिक्षेपोत्तीर्णकौरवपरिभवसागरस्य निर्व्यूढदुर्वहप्रतिज्ञाभारस्य सुयोधनानुजशतोन्मूलनप्रभञ्जस्य दुःशासनोरःस्थलविदलननरसिंहस्य दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य बलिनः प्राभञ्जनेर्वृकोदरस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः । (आकाशे) किं ब्रूथ-सर्वतोऽधिकतरमपि प्रवृत्तं किं नालीकयसि इति । साधु, पुत्रकाः, साधु । अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम् ।

युधिष्ठिरः—आर्य जयंधर ।

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिर—गच्छ प्रियख्यापकं पाञ्चालकं पारितोषिकेण परितोषय ।

कञ्चुकी---यदाज्ञापयति देवः । (इति पाञ्चालकेन सह निष्क्रान्तः) ।

द्रौपदी—महाराज किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणितः—पञ्चानामप्यस्माकं मध्ये येन ते रोचते तेन सह ते सङ्ग्रामो भवतु इति । यदि

---

इति पाठे अन्तराभ्यन्तरो वंशः गृहमन्तर्वंशः । तत्र नियुक्ताः । संज्ञापूर्वकत्वान्न वृद्धिः ।] दौवारिका द्वारनियुक्ताः । भुजयोर्बलेन परिक्षेपस्तेनोत्तीर्णः कौरवेभ्यो यः परिभवोऽवमानना स एव सागरो येन । निर्व्यूढः [नितरामूढः दुर्वहो दुःखेन वोढुं शक्यः प्रतिज्ञारूपो भारो येन तस्य ।] सुयोधनानुजशतस्योन्मूलने प्रभञ्जनस्तस्य ।] प्रभञ्जनो वायुः । प्रभञ्जकस्य भञ्जयितुः । [दुर्योधनस्य ऊरुभङ्गे भङ्गेन वा विनिश्चितो विजयो यस्य ।] प्राभञ्जनेर्वायुपुत्रस्य भीमस्य । अत इञ् इत्यपत्यार्थे इञ् । [अधिकतरमुक्तसविशेषम् ।] मङ्गलकर्मेति शेषः । हितं करोतीति हितकारी तस्य भावो हितकारिता । अनुक्ता स्वाम्यादेश विना कृता

(प्रवेश करके)

कञ्चुकी—महाराज आज्ञा दें।

युधिष्ठिर—कञ्चुकी, भगवान् देवकी-नन्दन के प्रति अत्यधिक आदर के कारण मेरे वत्स (भीमसेन) के विजय-मङ्गल के लिये उसके अनुरूप समारोह प्रारम्भ कर दिये जायें।

कञ्चुकी—जैसी महाराज आज्ञा दें (उत्साह के साथ घूमकर) हे प्रबन्धकों के मुखियाओं, प्रदान रूप के क्रमानुसार अन्तःपुर के कर्मचारियों और द्वारपालों, यह महाराज युधिष्ठिर स्नेह-भरे मन से वलशाली वायु-पुत्र वृकोदर का, जिसने वाहु-वल के प्रयोग से कौरवों के अपमानरूपी सागर को पार कर लिया है; जिसने कठिन प्रतिज्ञा-भार को निभा दिया है, जो सुयोधन के सौ छोटे भाइयों को उखाड़ने में पवन के समान है, जो दुःशासन के वृक्षःस्थल को विदीर्ण करने में नृसिह के समान है और दुर्योधन की जङ्घारूपी स्तम्भ को तोड़ने से जिसकी विजय निश्चित है, मङ्गल-महोत्सव करने की आज्ञा दे रहे हैं। (आकाश की ओर देखकर) क्या कह रहे हो—'सब ओर अत्यधिक किये गये भी मङ्गल-कर्म को कैसे नहीं देख रहे ? ठीक, पुत्रों ठीक। बिना कहे हित करना ही हृदय-स्थित स्वामि-भक्ति को प्रकट करता है।

युधिष्ठिर—आर्य जयन्धर।

कञ्चुकी—महाराज आज्ञा दें।

युधिष्ठिर—जाओ, प्रिय निवेदन करने वाले पाञ्चालक को पारितोषिक से सन्तुष्ट करो।

कञ्चुकी—महाराज की जैसी आज्ञा हो। (यह कहकर पाञ्चालक के साथ बाहर चला गया)।

द्रौपदी—महाराज, लेकिन स्वामी भीमसेन उस दुराचारी से (यह) क्यों कहा—'हम पाँचों में से जिसके साथ तुम्हें अच्छा लगे, उसके साथ तुम्हारा

---

हितकारिता।] **पारितोषिकेण** परितोषहेतुना धनेन। अथ किंनिमित्तं एवं **भणितः**—यदि पुनर्माद्री० सङ्गरस्तेन···। अत्र **माद्रीसुतौ** नकुलसहदेवौ।

(प्रविश्य)

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिरः—ज्ञायतां किमेतत् ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रम्य पुनः प्रविश्य) देव, क्षुन्मानतिथिरुपस्थितः ।

युधिष्ठिरः—शीघ्रं प्रवेशय ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रान्तः) ।

(ततः प्रविशति मुनिवेषधारी चार्वाको नाम राक्षसः)

राक्षसः—(आत्मगतम्) एषोऽस्मि चार्वाको नाम राक्षसः सुयोधनस्य मित्रं पाण्डवान्वञ्चयितुं भ्रमामि । (प्रकाशम्) तृषितोऽस्मि । संभावयतु मां कश्चिज्जलच्छायाप्रदानेन । (इति राज्ञः समीपमुपसर्पति)

(सर्वे उत्तिष्ठन्ति)

युधिष्ठिरः—मुने अभिवादये ।

राक्षसः—अकालोऽयं समुदाचारस्य । जलप्रदानेन संभावयतु माम् ।

युधिष्ठिरः—मुने, इदमासनम् उपविश्यताम् ।

राक्षसः—(उपविश्य) ननु भवतापि क्रियतामासनपरिग्रहः ।

युधिष्ठिरः—(उपविश्य) कः कोऽत्र भोः । सलिलमुपनय ।

(प्रविश्य गृहीतभृङ्गारः)

कञ्चुकी—(उपसृत्य) महाराज, शिशिरसुरभिसलिलसंपूर्णोऽयं भृङ्गारः पानभाजनं चेदम् ।

युधिष्ठिरः—मुने, निर्वर्त्यतामुदन्याप्रतिकारः ।

राक्षसः—(पादौ प्रक्षाल्योपस्पृशन्विचिन्त्य) भोः क्षत्रियस्त्वमिति मन्ये ।

युधिष्ठिरः—सम्यग्वेदी भवान् । क्षत्रिय एवास्मि ।

---

[क्षुन्मान् बुभुक्षितः । महाभारते तु अयं राक्षसः युद्धसमाप्त्यनन्तरं महाराजयुधिष्ठिरे राजधानिं प्रविष्टे परिव्राजकरूपत्वेन ब्राह्मणैः सह प्रवेशितः । तदुक्तं शान्तिपर्वणि ३८ शेऽध्याये-ब्राह्मण ऊचुः—एष दुर्योधनसखश्चार्वाको नाम राक्षसः । परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ इति । अकालः अयुक्त

(प्रवेश करके)

**कञ्चुकी**—महाराज आज्ञा दीजिये ।

**युधिष्ठिर**—मालूम करो यह क्या है ?

**कञ्चुकी**—महाराज की जो आज्ञा हो । (यह कहकर बाहर जाकर पुनः प्रवेश करके) महाराज, (कोई) भूखा अतिथि आया है ।

**युधिष्ठिर**—शीघ्र अन्दर लिवा लाओ ।

**कञ्चुकी**—महाराज की जो आज्ञा । (यह कहकर बाहर चला गया) । (तत्पश्चात् मुनि का वेष धारण किये चार्वाक नाम का राक्षस प्रवेश करता है ।)

**राक्षस**—(मन में) यह मैं सुयोधन का मित्र चार्वाक नाम का राक्षस हूँ । मैं पाण्डवों को धोखा देने के लिए घूम रहा हूँ । (प्रकट में) मैं प्यासा हूँ । कोई मुझे जल और छाया देकर अनुगृहीत करे । (यह कहकर राजा के समीप जाता है) ।

(सब उठ खड़े होते हैं ।)

**युधिष्ठिर**—मुनि, मैं अभिवादन करता हूँ ।

**राक्षस**—यह शिष्टाचार का समय नहीं है । मुझे जल देकर अनुगृहीत कीजिये ।

**युधिष्ठिर**—मुनि, यह आसन (है) । बैठिये ।

**राक्षस**—(बैठकर) अब आप भी तो आसन ग्रहण कीजिये ।

**युधिष्ठिर**—(बैठकर) यहाँ कोई है ? जल लाओ ।

(सुराही लिए हुए प्रवेश करके)

**कञ्चुकी**—(समीप जाकर) महाराज, यह शीतल और सुगन्धित जल से पूर्ण सुराही है और यह पीने के लिए पात्र है ।

**युधिष्ठिर**—मुनि, प्यास का प्रतिकार कीजिए ।

**राक्षस**—(पैर धोकर आचमन करते हुए सोचकर) अरे, मैं समझता हूँ कि तुम क्षत्रिय हो ।

**युधिष्ठिर**—आप ठीक समझ रहे हैं । क्षत्रिय हूँ ।

---

कालः । समुदाचारस्य शिष्टाचारस्य ।] भृङ्गारः कनकालुका इत्यमरः ॥ उदन्या

माद्रीसुतयोरेकतरेण सह सङ्ग्रामस्तेन प्रार्थितो भवेत्ततोऽत्याहितं भवेत् ।

[महाराअ, किंणिमित्तं उण णाहभीमसेणेण सो दुराआरो भणिदो—पञ्चाणं वि अह्माणं मज्झे जेण दे रोअदि तेण सह दे संगामो होदु त्ति । जइ मद्दीसुदाणं एकदरेण सह संगामो तेण पत्थिदो भवे तदो अच्चाहिदं भवे] ।

युधिष्ठिरः—कृष्ण एवं मन्यते जरासंधघाती । हतसकलसुहृद्वन्धुवीरानुजराजन्यासु कृपकृतवर्माऽश्वत्थामशेषास्वेकादशस्वक्षौहिणीष्वबान्धवः शरीरमात्रविभव, कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः परित्यजेदायुधं तपोवनं वा व्रजेत्सन्धि वा पितृमुखेन याचेत । एवं सति सुदूरमतिक्रान्तः प्रतिज्ञाभारो भवेत्सकलरिपुजयस्येति । समरं प्रतिपत्तु पञ्चानामपि पाण्डवानमेकस्तापि नैव क्षमः सुयोधनः । शङ्के चाहं गदायुद्ध वृकोदरस्यैवानेन । अयि सुक्षत्रिये, पश्य—

क्रोधोद्गूर्णगदस्य नास्ति सदृशः सत्यं रणे मारुतेः
कौरव्ये कृतहस्तता पुनरियं देवे यथा सीरिणि ।
स्वस्त्यस्तूद्धतधार्तराष्ट्रनलिनीनागाय वत्साय मे
शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम् ॥१३॥

(नेपथ्ये)

तृषतोऽस्मि भोस्तृषितोऽस्मि । संभवयतु कश्चित्सलिलच्छायासंप्रदानेन माम् ।

युधिष्ठिरः—(आकर्ण्य) कः कोऽत्र भोः ।

---

[हताः सकलाः सुहृद्वन्धुवीराः अनुजा राजन्याः क्षत्रियाश्च यासु यथाभूतासु । शरीरमेव शरीरमात्रं विभवो यस्य स तथा । सकलान् रिपून् जेष्याम इति प्रतिज्ञाया भारः सुदूरमत्यन्तमतिक्रान्तो निर्वाहयितुमशक्यो भवेत् । एकस्यापि पाण्डवस्य एकेनापि पाण्डवेनेत्यर्थः । समरं प्रतिपत्तुं सुयोधनः न क्षमो न समर्थः वृकोदरस्य पाण्डवेषु बलिष्ठस्य [एवं अनेन सुयोधनेन गदायुद्धं शङ्के ।]

क्रोधेति । क्रोधेन उद्गूर्णा उद्यमिता गदा येन स तथा तस्य । उद्गूर्णोद्यते इत्यमरः । [कृतः शस्त्रविक्षेपणे अभ्यस्तः हस्तः यस्य स कृतहस्तः । तस्य भावः ।] सीरिणि बलभद्रे । [तदुक्तं भारते—उपदेशोऽनयोस्तुल्यो भीमस्तु

युद्ध होगा ।' यदि उसने माद्री के दोनों पुत्रों में से किसी एक के साथ युद्ध की प्रार्थना की होती, तो अनर्थ हो जाता।

युधिष्ठिर—द्रौपदी, जरासन्ध के शत्रु (भीमसेन) का ऐसा विचार होगा—'ग्यारह अक्षौहिणी सेनाओं में, जिनमें सब मित्र वन्धु वीर, अनुज और क्षत्रिय मर गये हैं, केवल मात्र कृप, कृतवर्मा और अश्वत्थामा के शेष रह जाने पर वान्धव-हीन धृतराष्ट्र-पुत्र, जिसका केवल शरीर ही धन शेष रह गया है, कभी अपने अभिमान को त्यागकर आयुध का परित्याग कर दे, (और) तपोवन को चला जाय अथवा पिता के मुख से सन्धि की प्रार्थना करने लगे। ऐसा होने पर सब शत्रुओं को जीतने की प्रतिज्ञा की निर्वाह वहुत दूर चला जायेगा।' सुयोधन पाँचों पाण्डवों में से किसी के भी साथ युद्ध करने में समर्थ नहीं है। और मुझे इसके साथ भीमसेन के ही गदायुद्ध की आशङ्का है अरी वीर क्षत्रिया, देखो—

सचमुच क्रोध से गदा उठाये हुए वायु-पुत्र (भीम) का युद्ध में कोई जोड़ नहीं है। लेकिन कौरव (दुर्योधन) में भगवान् ने वलराम जैसी प्रवीणता है। उद्धत कौरव-रूपी कमलिनियों के लिये गज समान, मेरे वत्स (भीम) का कल्याण हो। मैं सुयोधन के साथ उसके ही संग्राम की आशङ्का करता हूँ, अन्यों के (संग्राम) की नहीं ॥१३॥

(नेपथ्ये में)

मैं प्यासा हूँ, अरे मैं प्यासा हूँ। कोई जल और छाया देकर मुझे अनुगृहीत करे।

युधिष्ठिर—(सुनकर) अरे वहाँ कौन है ?

---

वलवत्तरः । कृती यत्नपरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥महा० ५८.३.। उद्धता दृप्ता धार्तराष्ट्रा एव नलिन्यः कमलिन्यस्तासां विदलने नागो हस्ती। यद्वा उद्धता धार्तराष्ट्रा एव नालिन्यो येन स चासौ नागः तस्य मङ्गलं कल्याणं भूयात् यतः तस्य भीमस्य सुयोधनेन समरं गदायुद्धं शङ्के । भीमः तेन सह गदायुद्धे विजयी भवेन्नवेति शङ्के इत्यर्थः। इतरेषां तु गदायुद्धं न भवतीति क्षमा एव ते सुयोधनं जेतुमिति तेषां समरं न शङ्के इति भावः ॥१३॥

(प्रविश्य)

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिरः—ज्ञायतां किमेतत् ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रम्य पुनः प्रविश्य) देव, क्षुन्मानतिथिरुपस्थितः ।

युधिष्ठिरः—शीघ्रं प्रवेशय ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रान्तः) ।

(ततः प्रविशति मुनिवेषधारी चार्वाको नाम राक्षसः)

राक्षसः—(आत्मगतम्) एषोऽस्मि चार्वाको नाम राक्षसः सुयोधनस्य मित्रं पाण्डवान्वञ्चयितुं भ्रमामि । (प्रकाशम्) तृषितोऽस्मि । संभावयतु मां कश्चिज्जलच्छायाप्रदानेन । (इति राज्ञः समीपमुपसर्पति)

(सर्वे उत्तिष्ठन्ति)

युधिष्ठिरः—मुने अभिवादये ।

राक्षसः—अकालोऽयं समुदाचारस्य । जलप्रदानेन संभावयतु माम् ।

युधिष्ठिरः—मुने, इदमासनम् उपविश्यताम् ।

राक्षसः—(उपविश्य) ननु भवतापि क्रियतामासनपरिग्रहः ।

युधिष्ठिरः—(उपविश्य) कः कोऽत्र भोः । सलिलमुपनय ।

(प्रविश्य गृहीतभृङ्गारः)

कञ्चुकी—(उपसृत्य) महाराज, शिशिरसुरभिसलिलसंपूर्णोऽयं भृङ्गा पानभाजनं चेदम् ।

युधिष्ठिरः—मुने, निर्वर्त्यतामुदन्याप्रतिकारः ।

राक्षसः—(पादौ प्रक्षाल्योपस्पृशन्विचिन्त्य) भोः क्षत्रियस्त्वमिति मन्ये

युधिष्ठिरः—सम्यग्वेदी भवान् । क्षत्रिय एवास्मि ।

---

[क्षुन्मान् बुभुक्षितः । महाभारते तु अयं राक्षसः युद्धसमाप्त्यनन्त महाराजयुधिष्ठिरे राजधानिं प्रविष्टे परिव्राजकरूपत्वेन ब्राह्मणैः सह प्रवेशित तदुक्तं शान्तिपर्वणि ३८ शेऽध्याये-ब्राह्मण ऊचुः—एष दुर्योधनसखश्चार्वा नाम राक्षसः । परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ इति । अकालः अयु

(प्रवेश करके)

**कञ्चुकी**—महाराज आज्ञा दीजिये ।

**युधिष्ठिर**—मालूम करो यह क्या है ?

**कञ्चुकी**—महाराज की जो आज्ञा हो । (यह कहकर बाहर जाकर पुनः प्रवेश करके) महाराज, (कोई) भूखा अतिथि आया है ।

**युधिष्ठिर**—शीघ्र अन्दर लिवा लाओ ।

**कञ्चुकी**—महाराज की जो आज्ञा । (यह कहकर बाहर चला गया) । (तत्पश्चात् मुनि का वेष धारण किये चार्वाक नाम का राक्षस प्रवेश करता है ।)

**राक्षस**—(मन में) यह मैं सुयोधन का मित्र चार्वाक नाम का राक्षस हूँ । मैं पाण्डवों को धोखा देने के लिए घूम रहा हूँ । (प्रकट में) मैं प्यासा हूँ । कोई मुझे जल और छाया देकर अनुगृहीत करे । (यह कहकर राजा के समीप जाता है) ।

(सब उठ खड़े होते हैं ।)

**युधिष्ठिर**—मुनि, मैं अभिवादन करता हूँ ।

**राक्षस**—यह शिष्टाचार का समय नहीं है । मुझे जल देकर अनुगृहीत कीजिये ।

**युधिष्ठिर**—मुनि, यह आसन (है) । बैठिये ।

**राक्षस**—(बैठकर) अब आप भी तो आसन ग्रहण कीजिये ।

**युधिष्ठिर**—(बैठकर) यहाँ कोई है ? जल लाओ ।

(सुराही लिए हुए प्रवेश करके)

**कञ्चुकी**—(समीप जाकर) महाराज, यह शीतल और सुगन्धित जल से पूर्ण सुराही है और यह पीने के लिए पात्र है ।

**युधिष्ठिर**—मुनि, प्यास का प्रतिकार कीजिए ।

**राक्षस**—(पैर धोकर आचमन करते हुए सोचकर) अरे, मैं समझता हूँ कि तुम क्षत्रिय हो ।

**युधिष्ठिर**—आप ठीक समझ रहे हैं । क्षत्रिय हूँ ।

---

कालः । समुदाचारस्य शिष्टाचारस्य ।] भृङ्गारः कनकालुका इत्यमरः ॥ उदन्या

राक्षसः—सुलभश्च स्वजनविनाशः सङ्ग्रामेषु प्रतिदिनमतो नादेयं भवद्भ्यो जलादिकम् । भवतु । छाययैवानया सरस्वतीशिशिरतरङ्गस्पृशा मरुता चानेन विगतक्लमो भविष्यामि ।

द्रौपदी—बुद्धिमतिके, वीजय महर्षिमनेन तालवृन्तेन ।

[बुद्धिमदिए, वीएहि महेसिं इमिणा तालविन्तेण ।]

(चेटी तथा करोति)

राक्षसः—भवति, अनुचितोऽयमस्मासु समुदाचारः ।

युधिष्ठिरः—मुने, कथय कथमेवं भवान्परिश्रान्तः ।

राक्षसः—मुनिजनसुलभेन कौतूहलेन तत्र भवतां महाक्षत्रियाणां द्वन्द्वयुद्धमवलोकयितुं पर्यटामि समन्तपञ्चकम् । अद्य तु बलवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतोऽस्मि ।

(सर्वे विषादं नाटयन्ति)

कञ्चुकी—मुने, न खल्वेवम् । भीमसुयोधनयोरिति कथय ।

राक्षसः—आः, अविदितवृत्तान्त एव कथं मामाक्षिपसि ।

युधिष्ठिरः—महर्षे, कथय कथय ।

राक्षसः—क्षणमात्रं विश्रम्य सर्वं कथयामि भवतो न पुनरस्य वृद्धस्य ।

युधिष्ठिरः—कथय किमर्जुनसुयोधनयोरिति ।

राक्षसः—ननु पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमिति ।

युधिष्ठिरः—न भीमसुयोधनयोरिति ।

राक्षसः—वृत्तं तत् ।

(युधिष्ठिरो द्रौपदी च मोहमुपगतौ)

कञ्चुकी—(सलिलेनासिच्य) समाश्वसितु देवो देवी च ।

चेटी—समाश्वसितु समाश्वसितु देवी । [समस्ससदु समस्ससदु देवी ।]

---

तु पिपासा तृट् इत्यमरः । स्वजनविनाशः अतोऽशौचसम्भावनयेति भावः । सरस्वत्याः शिशिरांस्तरङ्गान्स्पृशतीति तेन] सरस्वती नदीभेदः । हञ्जे बुद्धिमतिके वीजयैनं महर्षिमेतेन तालवृन्तकेन । व्यजनं तालवृन्तकम् इत्यमरः । [द्वन्द्वयुद्धमिति जातावेकवचनम् । शरदातपस्य शरत्सूर्यातपस्य । अपर्याप्तमसमा-

राक्षस—प्रतिदिन युद्ध में बन्धु-मरण सुलभ हैं, इसलिए आप से जल आदि का ग्रहण नहीं करना चाहिए। अच्छा। इस छाया से और सरस्वती (नदी) की शीतल तरङ्गों को छूने वाले इस वायु से ही थकान दूर कर लूँगा

द्रौपदी—बुद्धिमति के, इस पंखे से महर्षि की हवा करो।

(चेटी वैसा ही करती है)

राक्षस—आदरणीय, हमारे प्रति यह शिष्टाचार उचित नहीं।

युधिष्ठिर—मुनि महाराज, बतलाइये, आप इस प्रकार कैसे थक गये ?

राक्षस—मुनि जन सुलभ उत्सुकता के कारण मैं आदरणीय महान् क्षत्रियों का द्वन्द्व-युद्ध देखने के लिये समन्तपञ्चक में घूम रहा हूँ। आज तो शरद् ऋतु की धूप के तेज होने के कारण अर्जुन और सुयोधन के गदा-युद्ध को अधूरा ही देखकर आ गया हूँ।

(सब दुःख का अभिनय करते हैं)

कञ्चुकी—मुनि, ऐसा नहीं है। 'भीम और सुयोधन का (गदा-युद्ध) ऐसा' कहिये।

राक्षस—आह ! बिना बात जाने ही मुझ पर आक्षेप कैसे कर रहे हो ?

युधिष्ठिर—महर्षि, कहिये, कहिये।

राक्षस—क्षण-भर विश्राम करके सब कुछ आप से कह दूँगा, लेकिन इस बूढ़े से नहीं।

युधिष्ठिर—कहिये, अर्जुन और सुयोधन का क्या (हुआ) ?

राक्षस—मैंने पहले ही बतला तो दिया कि 'गदा-युद्ध हुआ'।

युधिष्ठिर—भीम और सुयोधन का नहीं ?

राक्षस—वह हुआ था।

(युधिष्ठिर और द्रौपदी मूर्च्छित हो जाते हैं)

कञ्चुकी—(जल छिड़ककर) महाराज और महारानी धैर्य रक्खें।

चेटी—धैर्य रखिये, महारानी धैर्य रखिये।

(उभौ संज्ञां लभेते)

युधिष्ठिरः—किं कथयसि मुने वृत्तं भीमसुयोधनयोर्गदायुद्धमिति ।

द्रौपदी—भगवन् कथय कथय किं वृत्तमिति ।

[भअवं, कहेहि कि वृत्तंत्ति ।]

राक्षसः—कञ्चुकिन्, कौ पुनरेतौ ।

कञ्चुकी—ब्रह्मन्, एष देवो युधिष्ठिरः । इयमपि पाञ्चालराजतनया ।

राक्षसः—आ, दारुणमुपक्रान्तं मया नृशंसेन ।

द्रौपदी—हा नाथ भीमसेन । (इति मोहमुपगता) [हा णाह भीमसेण ।]

कञ्चुकी—किं नाम कथितम् ।

चेटी—समाश्वसितु समाश्वसितु देवी । [समस्ससदु समस्ससदु देवी ।]

युधिष्ठिरः—(सास्रम्) ब्रह्मन्,

पदे संदिग्ध एवास्मिन्दुःखामास्ते युधिष्ठिरः ।
वत्सस्य निश्चिते तत्त्वे प्राणत्यागादयं सुखी ॥१४॥

राक्षसः—(सानन्दमात्मगतम्) अत्रैव मे यत्नः (प्रकाशम्) यदि त्ववश्यं कथनीयं तदा संक्षेपतः कथयामि । न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम् ।

युधिष्ठिरः—(अश्रूणि मुञ्चन्)

सर्वथा कथय ब्रह्मन्संक्षेपाद्विस्तरेण वा ।
वत्सस्य किमपि श्रोतुमेष दत्तः क्षणो मया ॥१५॥

राक्षसः—श्रूयताम्,

तस्मिन् कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे ।

---

प्तम् । [यद्भट्टिनी समाज्ञापयति । बलवत्तर इति स्वार्थिकस्तरप् ॥ भवतः कृते इति शेषः । कथय किं वर्तत इति । [उपक्रान्तं प्रस्तुतं । नृशंसेन क्रूरेण ।]

पद इति । संदिग्धे [अस्फुटार्थे] एव पदे भवदुक्ते युधिष्ठिरो दुःखं यथा स्यादेवमास्ते तिष्ठति । [तत्त्वे निश्चिते यथार्थावस्थायां निश्चयेन ज्ञातायाम् ।] ॥१४॥

(दोनों चेतना प्राप्त करते हैं)

युधिष्ठिर--मुनि, क्या कहते हो कि भीम और सुयोधन का गदा-युद्ध हो चुका।

द्रौपदी—भगवन् बतलाइये, बतलाइये क्या हुआ ?

राक्षस—कञ्चुकी, ये दोनों हैं कौन ?

कञ्चुकी—ब्रह्मन्, यह भगवान् युधिष्ठिर हैं, और यह पाञ्चाल की राजकुमारी।

राक्षस—आह ! मुझ निर्दय ने कटु बात आरम्भ कर दी।

द्रौपदी—हाय ! नाथ भीमसेन। (मूर्च्छित हो जाती है)।

कञ्चुकी—आपने क्या कहा ?

चेटी—धैर्य रखिए, महारानी धैर्य रखिए।

युधिष्ठिर—(आँसू भरकर) ब्रह्मन्,

(वृत्तम्) इस संदिग्ध पद के कारण ही युधिष्ठिर दुःखी है। वत्स के विषय में यथार्थ के निश्चित हो जाने पर वह प्राण त्याग देने से सुखी (हो जायेगा) ॥१४॥

राक्षस—(आनन्द के साथ मन में) इसके लिए ही मेरा प्रयत्न है। (प्रकट में) यदि तो अवश्य कहना ही पड़ेगा तब संक्षेप से कह देता हूँ। (क्योंकि) बन्धु की विपत्ति को विस्तार से कहना ठीक नहीं है।

युधिष्ठिर—(आँसू बहाते हुए)।

हे ब्राह्मण संक्षेप से या विस्तार से किसी भी प्रकार कह डालिए। मैंने वत्स के सम्बन्ध में कोई भी (अमङ्गल) सुनने के लिए यह क्षण दे दिया है ॥१५॥

राक्षस—सुनिये—

दुर्योधन और भीम का वह भारी गदाओं की भयङ्कर ध्वनि वाला युद्ध होने पर—

---

सर्वथेति। किमपीत्यनेनामङ्गल्यं निवारयति। क्षणोऽवसरः। सर्वथा श्रोष्यामीत्यर्थः ॥१५॥

तस्मिन्निति। घोरं भयानकं [गुर्व्योर्गदयोः गदाप्रहारणमिति यावत्।

द्रौपदी—(सहसोत्थाय) ततस्ततः [तदो तदो ।]

राक्षसः—(स्वगतम्) कथं पुनरनयोर्लब्धसंज्ञतामपनयामि ?

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः सङ्गरः ।
आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृतिं दुःशासनारौ गतः ॥१६॥

युधिष्ठिरः—हा वत्स वृकोदर । (इति मोहमुपगतः)

द्रौपदी—हा नाथ भीमसेन, हा मम परिभवप्रतीकारपरित्यक्तजीवित, जटासुरबकहिडिम्बकिर्मीरकीचकजरासंधनिषूदन, सौगन्धिकाहरणचाटुकार, देहि मे प्रतिवचनम् । (इति मोहमुपगता) [हा णाह भीमसेण हा मह परिभवपडिआरपरिच्चत्तजीविअ, जडासुरबअहिडिम्बकिम्मीरकीचअजरासंधणिसूदण सोअन्धिआहरणचाडुआर देहि मे पडिवअणम् ।]

कञ्चुकी—(सास्रम्) हा कुमार भीमसेन, धार्तराष्ट्रकुलकमलिनीप्रालेयवर्ष (ससंभ्रमम्) समाश्वसितु महाराजः । भद्रे, समाश्वासय स्वामिनीम् । महर्षे, त्वमपि तावदाश्वासय महाराजम् ।

राक्षसः—(स्वगतम्) आश्वासयामि प्राणान्परित्याजयितुम् । (प्रकाशम्) भो भीमाग्रज, क्षणमेकमाधीयतां समाश्वासः । कथाशेषोऽस्ति ।

युधिष्ठिरः—(समाश्वस्य) महर्षे, किमस्ति कथाशेष इति ।

द्रौपदी—(प्रतिबुध्य) भगवन्, कथय कीदृशः कथाशेष इति ।

[ भअवं कहेहि कीदिसो कहासेसो त्ति । ]

कञ्चुकी—कथय कथय ।

राक्षसः—ततश्च हते तस्मिन्सुक्षत्रिये वीरसुलभां गतिमुपगते समरसंगलितं भ्रातृवधशोकजं बाष्पं प्रमृज्य भ्रातृवधशोकादपहाय गाण्डीवं, प्रत्यग्रक्षतजच्छटा-

---

घोरः ध्वनिर्यस्मिन् । सीरी बलभद्रः ।] प्रियः शिष्यो यस्येति प्रियशिष्यः । तस्य भावः प्रियशिष्यता ताम् । [संज्ञा हस्तचालयेन प्रहारस्थानसूचनम् ।] प्रतिकृतिं प्रतीकारम् । अर्थाद् दुःशासनवधस्य । दुःशासनारौ भीमे । तथा च भीमस्तेन हत इति भावः ॥१६॥

द्रौपदी—(वेग से उठकर) इसके बाद ? इसके बाद ?

राक्षस—(मन में) फिर इन दोनों की चेतना कैसे करूँ ;

तब हलधारी (बलराम) जल्दी से वहाँ आ गया; उसके सामने देर तक युद्ध होता रहा; लेकिन हलधारी ने शिष्य (दुर्योधन) के प्रति पक्षपात का आश्रय लेकर चुपके-से संकेत कर दिया, जिस (संकेत) को पाकर कुरुओं में श्रेष्ठ ने दुःशासन के शत्रु से प्रतिशोध पा लिया ॥१६॥

युधिष्ठिर—हाय, वत्स भीम । (यह कहकर मूर्च्छित हो जाता है) ।

द्रौपदी—हाय, नाथ भीमसेन ! हाय मेरे अपमान का बदला लेने में प्राणत्याग करने वाले ! जटासुर, बक हिडिम्ब किर्मीर कीचक और जरासन्ध को मारने वाले, कमल लाकर प्रसन्न करने वाले, मुझे उत्तर दीजिये । (यह कहकर मूर्च्छित हो जाती है) ।

कञ्चुकी—(आँसू भरकर) हाय, कुमार भीमसेन, कोरव-कुल-रूपी कमलिनी के लिए हिम-वर्षा-सदृश ! (घबराहट के साथ) महाराज धैर्य धारण कीजिए । भद्रे, स्वामिनी को धैर्य बँधाइये । महर्षि, आप भी महाराज को सान्त्वना देवें ।

राक्षस—(मन में) प्राण-त्याग कराने के लिये धैर्य बँधाता हूँ । (प्रकट में) हे भीम के बड़े भाई, क्षण-भर धैर्य रखिये । (अभी कुछ) कहानी शेष है ।

युधिष्ठिर—(संभलकर) महर्षि क्या कहानी शेष है ?

द्रौपदी—(होश में आकर) भगवन कहिये क्या कहना शेष ?

कञ्चुकी—कहिये, कहिये !

राक्षस—तब उस वीर क्षत्रिय के मारे जाने और-सुलभ गति पा लेने पर भाई के वध के शोक से उत्पन्न, पूर्णरूप से बहते हुए आँसुओं को पोंछकर

---

हा नाथ मदीयपरिभव०—हा जटासुर०—हा सौगन्धिकाहरणात्मचाटुकार क्वासि । अत्र जटासुरो दैत्यभेदः । बको दैत्यभेदः । सौगन्धिकं कमलम् । गङ्गायाः सुवर्णकमलाहरणाद्यद् द्रौपद्या आराधनं तत्र चाटुकारः प्रेम यस्य । [यद्वा तेन चाटुकार । धार्तराष्ट्राणां कुलं तदेव कमलिनी तस्याः शलेयवर्ष हिमवर्षं । तद्वन्नाशकर । हिमवृष्ट्या कमलिनी विनिश्यन्तीति प्रसिद्धिः ।] गति सरणरूपाम् । [समग्रं यथा तथा संगलितम् । प्रत्यग्रं-नूतनं यत्क्षतजं रक्तं तस्य

चर्चितां तामेव गदां भ्रातृहस्तादाकृष्य निवार्यमाणोऽपि संधित्सुना वासुदेवेन आगच्छागच्छेति सोपहासं भ्रमितगदाझङ्कारमूर्च्छितगम्भीरवचनध्वनिनाहूयमानः कौरवराजेन, तृतीयोऽनुजस्ते किरीटी योद्धुमारब्धः। अकृतिनस्तस्य गदाघाता-न्निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनुरतिप्रयत्नात्स्वरथमारोप्य द्वारकां नीतः।

युधिष्ठिरः—साधु भो अर्जुन, तदैव प्रतिपन्ना वृकोदरानुगमनपदवी गाण्डीवं परित्यजता। अहं पुनः केनोपायेन प्राणापगममहोत्सवमुत्सहिष्ये।

द्रौपदी—हा नाथ भीमसेन, न युक्तमिदानीं ते कनीयांसं भ्रातरमशिक्षितं गदायां दारुणस्य शत्रोरभिमुखं गच्छन्तमुपेक्षितुम्। (इति मोहमुपगता) [हा णाह भीमसेण ण जुत्तं दाणिं दे कणीअसं भादरं असिक्खिदं गदाए दारुणस्स सत्तुणो अहिमुहं उवेक्खिदुम।]

राक्षसः—ततश्चाहं।

युधिष्ठिरः—भवतु, मुने, किमतः परं श्रुतेन। हा तात भीमसेन, कान्तार-व्यसनवान्धव, हा मच्छरीरस्थितिविच्छेदकातर, जतुगृहविपत्समुद्रतरणयानपात्र हा किर्मीरहिडिम्बासुरजरासंधविजयैकमल्ल, हा कीचकसुयोधनानुजकमलिनी-कुञ्जर हा द्यूतपणप्रणयिन् हा मदाज्ञासम्पादक हा कौरववनदावानल,

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सा तदा
भक्त्या मे समदद्विपायुतवलेनाङ्गीकृता दासता।

---

छटया समूहेन चर्चितां लिप्ताम्।] संधित्सुना संधिं कर्तुमिच्छुना। [भ्रमिता या गदा तस्या झङ्कारेण मूर्च्छितो वृद्धिं प्राप्तो यः गम्भीरवचनध्वनिस्तेन। अकृतिनो गदायुद्धेऽलब्धपाटवस्य। अकृतहस्तस्येति यावत्। उत्प्रेक्षमाणेनापेक्ष-माणेन। कामपालेन वलभद्रेण। वृकोदरस्य वृकोदरेण भीमेन गता पदवी परलोकमार्गः इत्यर्थः। गाण्डीवं परित्यजता—सति हि गाण्डीवे दुर्योधनकृतस्य पराभवस्याशक्यत्वाद् भीमानुमरणस्य दुर्घटत्वादिति भावः।] हे नाथ भीमसेन युक्तमिदानीं ते कनीयांसं भ्रातरं धनुर्धरं गदाशिक्षाविमुखं दारुणस्य शत्रोरभिमुखं गच्छन्तं निवारयितुम्। अत्र कनीयांसं कनिष्ठम्। कान्तारो वर्त्म दुर्गमम् इत्यमरः। [तत्र यानि व्यसनानि आपदस्तत्र वान्धव साहाय्यकारिन्।]

भाई के वध के शोक के कारण गाण्डीव को छोड़कर, और ताजे रुधिर के समूह से लिप्त उस ही गदा को भाई के हाथ से लेकर, सन्धि की इच्छा वाले वसुदेव के द्वारा रोके जाने पर भी, घुमाई गई गदा की झङ्कार से बढ़ी हुई गम्भीर वचनों की ध्वनि वाले कौरव-राज द्वारा हँसी के साथ "आओ, आओ" इस प्रकार ललकारा गया तीसरा (पाण्डव), आपका छोटा भाई, किरीट (मुकुट) धारण करने वाला (अर्जुन) युद्ध करने लगा। (गदा में) अनभ्यस्त उस (अर्जुन) की गदा के प्रहार से मृत्यु की संभावना करता हुआ बलराम अर्जुन के पक्षपाती देवकी पुत्र को बड़े प्रयत्न से अपने रथ में बैठाकर द्वारका ले गया।

**युधिष्ठिर**—ठीक, अर्जुन, तूने गाण्डीव को त्यागकर तुरन्त भीम का मार्ग अपना लिया। लेकिन मैं किस उपाय द्वारा प्राण-त्याग के महोत्सव की अभिलाषा करूँ।

**द्रौपदी**—हाय, नाथ भीमसेन, अब तुम्हें गदा (युद्ध) में अनभ्यस्त, क्रूर शत्रु के समुख जाते हुए छोटे भाई की उपेक्षा करनी उचित नहीं थी। (मूच्छित हो जाती है)।

**राक्षस**—और इसके बाद में—

**युधिष्ठिर**—मुनि रहने दीजिए, इसके आगे सुनकर क्या (होगा)? हाय! प्रिय भीमसेन, वनवासरूपी विपत्ति के बान्धव; हाय! मेरे शरीर की स्थिति के भङ्ग से कातर, लाक्षागृह की विपत्ति रूपी समुद्र को पार करने में नौकाभूत; हाय! किर्मीर, हिडिम्ब, जटासुर और जरासन्ध को जीतने में अद्वितीय मल्ल; हाय! कीचक और सुयोधन के छोटे भाइयों रूपी कमलिनियों के लिये गज समान; हाय! जूए में (मेरी) शर्त को स्वीकार कर लेने वाले; हाय! मेरी आज्ञा के पालन करने वाले; हाय! कौरव-रूपी वन के वनाग्नि,

हे वत्स, द्यूत के व्यसनी मुझ निर्लज्ज की भक्ति के कारण दस सहस्र मतवाले हाथियों के बल वाले तुमने तब वह दासता स्वीकार की थी; मैंने उससे

---

शरीरस्थितिर्जीवनम्। [तस्य विच्छेदात्कातर।] यानपात्रं तु पोतः इत्यमरः। किर्मीरो दैत्यभेदः। [०नुजा एव कमलिन्यस्तासां कुञ्जर उन्मूलयितः।]

निर्लज्जस्येति। हे वत्स। दुरोदरं द्यूतम्। पणे द्यूते दुरोदरम् इत्यमरः। तत्र व्यसनिनः आसक्तिमतः मे भक्त्या। समदानां द्विपानामयुतं तस्येव बलं

किं नामापकृतं मयातदधिकंत्वय्यद्य यद्गम्यते।
त्यक्त्वाऽनाथमबान्धवं सपदि मां प्रीतिः क्व ते साऽधुना ॥१७॥

द्रौपदी—(संज्ञामुपलभ्योत्थाय च) महाराज, किमेतद्वर्तते ।
[महाराअ, किं एवं वट्टइ।]

युधिष्ठिरः—कृष्णे, किमन्यत्।

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदसन्धिभेदाशनिः।
गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥१८॥

द्रौपदी—नाथ भीमसेन, त्वया किल मे केशाः संयमितव्याः। न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम्। तत्प्रतिपालय मां यावदुपसर्पामि। (पुनर्मोहमुपगता) [णाह भीमसेण, तुए किल मे केसा संजमिदव्वा। ण जुत्तं वीररस्स खत्तिअस्स पडिण्णादं सिढिलेदुम्। ता पडिवालेहि मं जाव उवसप्पामि]

युधिष्ठिरः—(आकाशे) अम्ब पृथे, श्रुतोऽयं तव पुत्रस्य समुदाचारः। मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः। तात जरासंधशत्रो, किं नाम वैपरीत्यमेतावता कालेनाल्पायुषि त्वयि समालोकितं जनेन। अथवा मयैव बहूपलब्धम्।

दत्त्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे।

---

यस्य तेन। दशसहस्रसमदहस्तिप्राणासारेणेत्यर्थः।] त्वया तदा सा प्रसिद्धा दासताङ्गीकृतासीत्। [सीदतेति पाठे क्लेशमनुभवता त्वया।] किं नामेति। अतोऽधिकं त्वयि मयाद्य किमपकृतं तत्प्रकाशयेत्यर्थः ॥१७॥

किं नामैतद्वर्तते।

स इति। मघाधिपो जरासंधः। [मदान्धो दर्पोद्धतो मगधाधिप एव द्विरदो हस्ती तस्य सन्धिभेदे अशनिर्वज्र इव। गदा परिघ इव तेन शोभते तादृशेन। [०पाठान्तरे) गदापरिघः पाणौ यत्र तादृशेन। पाणिः करः। भुजयुगेनेति

अधिक तुम्हारा आज क्या उपकार कर दिया कि जो मुझ अनाथ और बान्धव-हीन को छोड़कर जल्दी से चले जा रहे हो ? अब तुम्हारा वह प्रेम कहाँ (चला गया) ।।१७।।

द्रौपदी—(चेतना प्राप्त करके और उठकर) महाराज, यह क्या है ?

युधिष्ठिर—द्रौपदी, और क्या—

कीचक को मारने वाला, बक, हिडिम्ब और किर्मीर का हनन करने वाला मद में अन्धे मगध-देश के राजा (जरासन्ध) रूपी हाथी की सन्धि छिन्न करने में वज्र के समान, परिघ सदृश गदा से शोभित भुज-युगल से युक्त, तेरा प्रिय, मेरा छोटा भाई और अर्जुन का बड़ा (भाई) वह अस्त को प्राप्त हो गया है ।।१८।।

द्रौपदी—नाथ भीमसेन, आपको तो मेरे केश बाँधने थे । वीर क्षत्रिय को प्रतिज्ञा किये हुए कार्य को छोड़ना उचित नहीं है । इसलिये मेरी प्रतीक्षा कीजिये मैं अभी आती हूँ । (फिर मूर्च्छित हो जाती है) ।

युधिष्ठिर—(आकाश की ओर देखकर) माता पृथा, आपने अपने पुत्र का यह शिष्टाचार सुना—मुझ अकेले, अनाथ, विलाप करते हुए को छोड़कर कहीं चला गया । प्रिय जरासन्ध-रिपु, अब तक लोगों ने तुझे अल्प आयु वाले के विषय में क्या विरुद्ध (आयु-विरोधी) बात देखी थी ? अथवा मैंने ही बहुत कुछ देख लिया था ।

जो तू मुझे पृथ्वी जिसके समस्त राजा (मुझे) कर देने वाले बना दिये थे, देकर लज्जित होता रहा; जो मेरे द्वारा जूए में बाजी पर रक्खा जाने पर तू

---

लक्षणे तृतीया । किल प्रसिद्धौ ।।१८।।

हा नाथ न युक्तमिदानीं भवतो वीरस्य [न तु निर्बलस्य] मां क्षणमात्रं··· यावत्त्वामनुगच्छामि । पृथे पृथानामधेयि । तात मान्य । जरासंधशत्रो भीम । बहु स्वल्पायुःसूचकम् ।

तदेवाह । दत्त्वेति । करदो राजभागदाता । [न करदा अकरदाः । अकरदा करदाः सम्पद्यमानाः कृताः करदीकृता अखिला नृपा यस्या तां । लज्जसे इति यत्तदेकं विनश्वरस्य ते चिह्नमित्यर्थः । बहुगुणस्य शीघ्रं विनश्वरत्वात् । एव-

स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत्सूदतां
वत्सैतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥१९॥

मुने, किं कथयसि । (तस्मिन्कौरवभीमयोः ६।१६ इत्यादि पठति)

राक्षसः—एवमेतत् ।

युधिष्ठिरः—धिगस्मद्भागधेयानि । भगवन्कामपाल, कृष्णाग्रज, सुभद्राभ्रातः

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम् ॥२०॥

(द्रौपदीमुपगम्य) अयि पाञ्चालि, उत्तिष्ठ । समानदुःखावेवावां भवावः । मूर्च्छया किं मामेवमनिसंधत्से ।

द्रौपदी—(लब्धसंज्ञा) बध्नातु नाथो दुर्योधनरुधिरार्द्रेण हस्तेन दुःशासनविमुक्तं मे केशहस्तम् । हञ्जे बुद्धिमतिके, तव प्रत्यक्षमेव नाथेन प्रतिज्ञातम् । (कञ्चुकिनमुपेत्य) आर्य, किं संदिष्टं तावन्मे देवेन देवकीनन्दनेन पुनरपि केशरचनारभ्यतामिति । तदुपनय मे पुष्पदामानि । विरचय तावत्कबरीम् । कुरु भगवतो नारायणस्य वचनम् । न खलु सोऽलीकं संदिशति । अथवा किं मया मन्तप्तयाभणितं । अचिरगतमार्यपुत्रमनु गमिष्यामि ।

---

संतप्तया भणितम् । अचिरगतमार्यपुत्रमनुगमिष्यामि । (युधिष्ठिरमुपगम्य) मन्यत्र ।] प्रीयसे प्रीतो भवसि । स्थित्यर्थं वासार्थम् । मत्स्यराजो विराटः । सूदस्तु सूपवत्सूपकारेऽपि यञ्जनेऽपि च । इति विश्वः । हे वत्स एतानि चिह्नानि ते विनाशशीलस्य दृष्टानि । तथा च मम भाग्यदोपाद् गुणा एव ते दोषा वृत्ता इति भावः ॥१९॥

कामपालो हलायुधः । इत्यमरः ।

ज्ञातीति । सुभद्राभ्रातृत्वेन विशेषणात्सुभद्राद्वारा [ज्ञातिप्रीतिर्मनसिनकृता चिन्तिता । क्षत्रियाणां धर्मो मनसि न कृतः । स च वीरयोः समदृष्टिता । अनुजस्य श्रीकृष्णस्य अर्जुनेन सह रूढमुपचितं सख्यं न गणितं मनस्याहितम् । शिष्ययोर्भीमसुयोधनयोः । (मन्दभाग्ये मयि विमुखोऽस्मदहितकरणात्प्रतिकूलः

क्रुद्ध न हुआ, (प्रत्युत) प्रसन्न ही रहा, जो तू मत्स्यदेश के राजा (विराट) के भवन में मेरे निवास के लिये रसोइया बना, हे वत्स, (मैंने) तुझ सहसा नष्ट होने वाले के ये लक्षण देख लिये थे ॥१९॥

हे मुनि क्या कह रहे हो ? (तस्मिन् कौरवभीमयोः ५।१६ इत्यादि श्लोक का पाठ करता है) ।

राक्षस— ऐसा ही है ।

युधिष्ठिर—हमारे भाग्य को धिक्कार है । भगवान् बलराम् कृष्ण के बड़े भाई, सुभद्रा के भाई,

(आपने) सम्बन्धियों के प्रेम का मन में विचार नहीं किया, क्षत्रियों के धर्म का विचार नहीं किया; अर्जुन के साथ अपने छोटे भाई की प्रसिद्ध गाढ मैत्री की भी चिन्ता न की । दोनों शिष्यों के प्रति आपका समान अनुराग हो सकता था, लेकिन (आपका) यह कैसा मार्ग है कि जो मुझ भाग्यहीन के प्रतिकूल हो गये हो ॥२०॥

(द्रौपदी के समीप जाकर) अरी पाञ्चाली, उठो । हम दोनों समान दुःख वाले होवें । मूर्छा द्वारा तुम इस प्रकार मुझे क्यों धोखा दे रही हो ?

द्रौपदी—(चेतना पाकर) स्वामी, दुर्योधन के रुधिर से गीले हाथ से दुःशासन द्वारा खोले गये मेरे केशों को बाँधे । सखी बुद्धिमतिका, तेरे सामने ही स्वामी ने प्रतिज्ञा की थी । (कञ्चुकी के समीप जाकर) आर्य, भगवान् वासुदेव ने मेरे लिये क्या संदेश भेजा था कि फिर से केशों का प्रसाधन प्रारम्भ कर दिया जाय । तो मेरे लिये सुमनों की माला लाओ । तब (मेरे लिये) वेणी बनाओ । भगवान् नारायण के वचन का पालन करो । वह कभी असत्य संदेश नहीं देंगे । अथवा मुझ दुःखी ने क्या कह डाला । अभी गये हुए आर्यपुत्र का

---

असीति कोऽयं पन्थ । न शिष्टसंमत इति भावः । ] ॥२०॥

अतिसंधत्से अनन्वितं करोषि । [ केशहस्त केशकलापम् । ] तवापि प्रत्यक्षमेव तेन...देवकीनन्दनेन पुनरपि केशबन्धनमारभ्यतामिति । ] केशरचना केशसंस्करणम् । ] तदुपनय मे पुष्पदामानि तावत् । विरचय मे कबरीम् । [अलीकं मिथ्या] । आदीप्यतां चिता । त्वमपि क्षत्रियधर्ममनुबध्नन्नेव तस्य

महाराज, आदीपय मे चिताम् । त्वमपि क्षत्रधर्ममनुवर्तमान एव नाथस्य जीवित-हरस्याभिमुखो भव । अथवा यत्ते रोचते ।

[बन्धुदु णाहा दुज्जोहरणरुधिलाद्देण हत्थेण दुस्सासणविमुक्कं केसहत्थम् । हञ्जे बुद्धिमदिए, तव पञ्चक्खं एव्व णाहेण पडिण्णादम् । अज्ज, किं संदिट्ठं दाव मे देवेण देवकीनन्दणेण पुणो वि केसरअणा आरम्भीअदु त्ति । ता उवणेहि मे पुप्फदामाइं । विरएहि दाव कवरीम् । करेहि भअवदो णाराअणस्स वअणम् । ण क्खु सो अलीअं संदिसदि । अहवा किं मए संतत्ताए भणिदम् । अचिरगदं अज्जउत्तं अणुगमिस्सम् । महाराअ, आदीवअ मे चिदाम् । तुमं वि खत्तधम्मं अणुवट्टन्तो एव्व णाहस्स जीविदहरस्स अहिमुहो होहि । अहवा जं दे रोअदि ।]

युधिष्ठिरः—युक्तमाह पाञ्चाली । कञ्चुकिन्, क्रियतामियं तपस्विनी चितासंविभागेन सह्यवेदना । ममापि सज्जं धनुरुपनय । अलमथवा धनुषा ।

तस्यैव देहरुधिरोक्षितपाटलाङ्गी-
मादाय संयति गदामपविध्य चापम् ।
भ्रातृप्रियेण कृतमद्य यदर्जुनेन
श्रेयो ममापि हि तदेव कृतं जयेन ॥१२॥

राक्षसः—राजन्, रिपुजयविमुखं ते यदि चेतस्तदा यत्र तत्र वा प्राणत्यागं कुरु । वृथा तत्र गमनम् ।

कञ्चुकी—धिङ् मुने, राक्षससदृशं हृदयं भवतः ।

राक्षसः—(सभयं स्वगतम्) किं ज्ञातोऽहमनेन । (प्रकाशम्) भो कञ्चुकिन् तयोर्गदया खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः । जानामि च तयोर्गदायां भुजसारम् । दुःखितस्य पुनरस्य राजर्षेरपरमनिष्टश्रवणं परिहरन्नेव ब्रवीमि ।

युधिष्ठिरः—(बाष्पम् विसृजन्) साधु, महर्षे, साधु । सुस्निग्धमभिहितम् ।

कञ्चुकी—महाराज, किं नाम शोकान्धतया देवेन देवकल्पेनापि प्राकृतेनैव त्यज्यते क्षात्रधर्मः ।

---

नाथजीवितहरस्य शत्रोरभिमुखो भव । [तपस्विनी वराकी । संविभागेन संप्रदानेन । चिताविरचनेनेति यावत् । सज्यमिति पाठे ज्यया मौर्व्या सहितम् ।]

अनुगमन करूँगी। (युधिष्ठिर के समीप जाकर) महाराज, मेरी चिता प्रज्वलित कीजिये। आप भी क्षत्रिय के धर्म का पालन करते हुए स्वामी के प्राणों का हरण करने वाले का सामना कीजिये। अथवा जो आपको अच्छा लगे।

युधिष्ठिर—पाञ्चाल की राजकुमारी ने (बिल्कुल) ठीक कहा है। कञ्चुकी, इस बेचारी को चिता देकर वेदना सहने योग्य कर दो। मेरे लिए भी धनुष तैयार करके लाओ। अथवा धनुष रहने दो—

भाई से प्रेम करने वाले अर्जुन ने धनुष को छोड़कर उसके ही शरीर के रुधिर से सिक्त और (इसलिये) लाल अङ्गों वाली गदा को लेकर जो आज युद्ध में किया है, मेरे लिये भी वह श्रेयस्कर है। जय से बस करना चाहिये ॥२१॥

राक्षस—राजन्, यदि आपका चित्त शत्रु को जीतने से पराङ्मुख है। तो कहीं भी प्राण त्याग दीजिये। वहाँ जाना व्यर्थ है।

कञ्चुकी—मुनि, आपको धिक्कार है। आपका हृदय तो राक्षस के समान है।

राक्षस—(भयपूर्वक आत्मगत) क्या इसने मुझे पहचान लिया है? (प्रकट में) हे कञ्चुकी, अर्जुन और दुर्योधन में गदा–युद्ध प्रारम्भ हुआ था। मैं गदा में उन दोनों के भुज-बल को जानता हूँ। इस दुःखी राजर्षि को अन्य अनिष्ट श्रवण से बचाते हुए ही मैंने ऐसा कहा है।

युधिष्ठिर—(आँसू बहाते हुए) ठीक है महर्षि, ठीक है। आपने हित की बात कही है।

कञ्चुकी—महाराज, शोक से अन्धा होने के कारण आप देव-तुल्य होकर भी सामान्य पुरुषों की भाँति क्षात्र-धर्म का परित्याग क्यों कर रहे हैं?

---

तस्येति। तस्यैव भीमस्यैव। [देहरुधिरेण उक्षितं सिक्तमत एव भ्रातृप्रियेणार्जुनेनाद्य संयति युद्धे। पाटलं रक्तमङ्गं यस्याः सा ताम्।] अपविध्य त्यक्त्वा।] यत् कृतं तद् गदामादाय युद्ध्वा जीवितत्यागः इत्यर्थः। तन्ममापि श्रेयः।] जयेन् कृतमलम् ॥१२॥

भुजसारमित्यन्तं कञ्चुकिने कथनम् [गदायां गदायुद्ध इति यावत्। भुजबल जानामि। तथाहि अर्जुनस्य हीनबलत्वात्तद्वधो निश्चित इत्यर्थः।] सस्निग्धं हितम्। देवकल्पेन देवतुल्येन।

युधिष्ठिरः—आर्य जयंधर,

शक्ष्यामि नो परिघपीवरबाहुदण्डौ
वित्तेशशक्रपुरदर्शितवीर्यसारौ ।
भीमार्जुनौ क्षितितले प्रविचेष्टमानौ
दृष्टं तयोश्च निधनेन रिपुं कृतार्थम् ॥२२॥

अयि पाञ्चालराजतनये, मद्दुर्नयप्राप्तशोच्यदशे, यथा संदीप्यते पावकस्तथा सहितावेव बन्धुजनं संभावयावः ।

द्रौपदी—आर्य कुरु दारुसंचयम् । प्रज्वाल्यतां चिता त्वरते मे हृदयं नाथं प्रेक्षितुम। (सर्वतोऽवलोक्य) कथं न कोऽपि महाराजस्य वचनं करोति । हा नाथ भीमसेन, तदेवेदं राजकुलं त्वया विरहितं परिजनोऽपि सांप्रतं परिहरति ।

[अज्ज, करेहि दारुसंचअम् । पज्जलीअदु चिदा । तुवरदि मे हिअअं णाधं पेक्खिदुम् । कहं ण को वि महाराअस्स वअणं करेदि । हा णाह भीमसेण, तं एव्व एदं राअउलं तुए विरहिदं पडिअणो वि संपदं परिहरदि । ]

युधिष्ठिरः—महर्षे न कश्चिच्छृणोति तावदावयोर्वचनम् । तदिन्धनप्रदानेन प्रसादः क्रियताम् ।

राक्षसः—मुनिजनविरुद्धमिदम् (स्वगतम्) पूर्णो मे मनोरथः। यावदनुपलक्षितः समिन्धयामि वह्निम् । (प्रकाशम्) राजन्, न शक्नुमो वयमिह स्थातुम् । (इति निष्क्रान्तः)

युधिष्ठिरः—कृष्णे, न कश्चिदस्मद्वचनं करोति । भवतु । स्वयमेवाहं दारुसंचयं कृत्वा-चितामादीपयामि ।

द्रौपदी—त्वरतां महाराजः । [तुवरदु तुवरदु महाराओ ।]

(नेपथ्ये कलकलः)

---

शक्ष्यामिति । [परिघवदर्गला इव पीवरौ बाहू दण्डाविव बाहुदण्डौ ययोस्तौ । वित्तेशः कुबेरः शक्रश्च तयोः पुरयोः दर्शितं वीर्यसारं याभ्यां तौ । कुबेरपुरे सौगन्धिकाहरणकाले भीमेन अस्त्राधिगमार्थं शक्रपुरीं गतेन शक्राज्ञया निवतकवचान् नाम दैत्यान् हतवतार्जुनेन च ।] क्षितितले प्रविचेष्टमानौ

**युधिष्ठिर**—आर्य जयन्धर,

मैं अर्गला के समान स्थूल भुज-दण्डों वाले और कुबेर तथा इन्द्र के नगरों में बल-पराक्रम दिखला चुके हुए भीम और अर्जुन को भूतल पर छटपटाते और शत्रु को उनकी मृत्यु से चरितार्थ हुआ नहीं देख सकूँगा ॥२२॥

अरी मेरी दुर्नीति से शोचनीय अवस्था को प्राप्त पाञ्चाल राजकुमारी, जैसे ही यह अग्नि प्रज्वलित हो, तब हम दोनों एक साथ ही बन्धुओं का (अनुगमन द्वारा) सम्मान करेंगे।

**द्रौपदी**—आर्य लकड़ियाँ एकत्र कीजिये। चिता प्रज्वलित की जाय, मेरा हृदय स्वामी को देखने के लिये उतावला है। (चारों ओर देखकर) कैसे ? कोई भी महाराज की आज्ञा का पालन नहीं कर रहा है। हाय स्वामी भीमसेन, तुझसे विहीन उस ही इस राजकुल को अब सेवक भी छोड़ रहे हैं।

**युधिष्ठिर**—महर्षि, कोई भी हम दोनों की बात नहीं सुन रहा है। इसलिए अब आप ही ईंधन देकर अनुगृहीत करें।

**राक्षस**—यह मुनि लोगों के प्रतिकूल है। (आत्मगत) मेरी कामना पूर्ण हुई। अब छिपकर अग्नि प्रज्वलित करूँगा। (प्रकट में) राजन्, हम यहाँ न ठहर सकेंगे। (यह कहकर बाहर चला गया)।

**युधिष्ठिर**—द्रौपदी, कोई हमारी बात नहीं मान रहा है। अच्छा। मैं स्वयं ही लकड़ियाँ इकट्ठा करके चिता प्रज्वलित करता हूँ।

**द्रौपदी**—जल्दी कीजिये, महाराज जल्दी कीजिये।

(नेपथ्य में कलकल ध्वनि होती है)

---

मरणव्यथाकुलौ भूम्यां लुठन्तौ।] भीमार्जुनौ रिपुं च कृतार्थं कृतकृत्यं द्रष्टुं न शक्ष्यामि। शक्ष्यामि तौ इति पाठे तौ द्रष्टुं शक्ष्यामि [इति काकुना] न शक्ष्यामीत्यर्थः ॥२२॥

[मम दुर्नयः] **मद्दुर्नयस्तेन प्राप्ता शोच्या दशा यां तथाभूते-। सहितावेकत्र** देहत्यागेनेत्यर्थः] महाराज महाराज आनाय्यतां तावद्दारुसंचयः। संप्रज्वाल्यतां चिता। तदेव राजकुलमिदानीं त्वया विरहितम्। परिजनोऽपि महाराजं परिभवति। **समिन्धयामि** दीपयामि। [दर्पः अस्य संजातः असौ दर्पितः। **बलेन**

द्रौपदी—(सभयमाकर्ण्य) महाराज, कस्याप्येष बलदर्पितस्य विषमः शङ्खनिर्घोषः श्रूयते । अपरमप्यप्रियं श्रोतुमस्ति निर्बन्धस्ततो विलम्ब्यते ।

[महाराअ, कस्स वि एसो बदलप्पिदस्स विसमो सङ्खणिग्घोसो सुणीअदि । अवरं वि अप्पिअं सुणिदुं अत्थि णिब्बन्धो तदो विलम्बीअदि ।]

युधिष्ठिरः—न खलु विलम्ब्यते । उत्तिष्ठ ।

(इति सर्वे परिक्रामन्ति)

युधिष्ठिरः—अयि पाञ्चालि, अम्बायाः सपत्नीजनस्य च किंचित्संदिश्य निवर्तय परिजनम् ।

द्रौपदी—महाराज अम्बायै एवं संदेक्ष्यामि—यः स बकहिडिम्बकिर्मीरजटासुरजरासंघविजयमल्लस्ते मध्यमपुत्रः स मम हताशायाः पक्षपातेन परलोकं गतः इति । [महाराअ, अम्बाए एव्वं संदिसिस्सं—जो सो बअहिडिम्बकिम्मीरजडासुर जरासंधविजअमल्लो दे मज्झमपुत्तो सो मम हदासाए पक्खवादेण परलोअं गदो' त्ति ।]

युधिष्ठिरः—भद्रे बुद्धिमतिके, उच्यतास्मद्वचनादम्बा ।

येनासि तत्र जतुवेश्मनि दीप्यमाने
निर्वाहिता सह सुतैर्भुजयोर्बलेन ।
तस्य प्रियस्य बलिनस्तनयस्य पाप-
माख्यामि तेऽम्ब कथयेत्कथमीदृगन्यः ॥२३॥

आर्य जयंधर, त्वयापि सहदेवसकाशं गन्तव्यम् । वक्तव्यश्च तत्रभवान्पाण्डुकुलबृहस्पतिर्माद्रेयः कनीयानस्माकं सकलकुरुकुलकमलाकरदावानलो युधिष्ठिरः परलोकमभिप्रस्थितः प्रियानुजमप्रतिकूलं सततमाशंसनीयमसंमूढं व्यसनेऽभ्युदये च धृतिमन्तं भवन्तमविरलमालिङ्गच शिरसि चाघ्रायेदं प्रार्थयते—

---

दर्पितः बलदर्पितस्तस्य । विषमः कर्णकठोरः । निर्घोषः शब्दः । निर्बन्धः आग्रहः । दृढभिलाप इत्यर्थः । ततो विलम्ब्यते इति प्रश्नकाकुः । विजये मल्लः विजयमल्लः । [एतत्संदेष्टव्यम्—योऽसौ मल्लो मध्यमपुत्रस्ते स मम''' ।]

येनेति । तत्र वारणावते । तथा च भारतम्—भीमसेनस्तु राजेन्द्र भीमवेग-

**द्रौपदी**—(सुनकर भयपूर्वक) महाराज, यह किसी बल के गर्वीले की भयङ्कर शङ्खध्वनि सुनाई दे रही है। (आपको) अन्य भी अप्रिय सुनने की अभिलाषा है, इसलिए (वह) विलम्ब किया जा रहा है।

**युधिष्ठिर**—नहीं, (अब कोई) विलम्ब नहीं है। उठो।

(सब जाते हैं)

**युधिष्ठिर**—अरी पाञ्चाली, अम्मा और सपत्नियों को कुछ संदेश देकर सेवकों को लौटा दो।

**द्रौपदी**—महाराज, अम्मा को इस प्रकार संदेश दूंगी—जो बक, हिडिम्ब, किर्मीर, जटासुर और जरासन्ध को जीतने वाला मल्ल, (आपका) मंझला पुत्र था, वह मुझ मूर्ख के प्रति प्रेम के कारण परलोक चला गया।

**युधिष्ठिर**—भद्र बुद्धिमतिका, मेरी ओर से अम्मा से कहना—

हे अम्ब, जिसने वहाँ वारणावत में लाक्षा-गृह के जलने पर तुम्हें पुत्रों सहित अपने भुजबल से निकाला था, (तुम्हारे) उस बलवान् प्रिय पुत्र के अमङ्गल के विषय में कह रहा हूँ। अन्य ऐसा कैसे कह सकता है ॥२३॥

आर्य जयन्धर, आप भी सहदेव के पास जायें और पाण्डु-वंश के बृहस्पति माद्री के पुत्र, हमारे छोटे भाई से कहें कि—सम्पूर्ण कुरुकुलरूपी कमलाकर में वनवह्नि सदृश, परलोक को प्रस्थान करने वाला युधिष्ठिर सर्वदा अनुकूल रहने वाले, प्रत्याशा के योग्य, विपत्ति में विमूढ न होने वाले और अभ्युदय में क्षमाशील आप प्रिय अनुज का गाढ आलिङ्गन करके और सिर सूंघकर यह याचना करता है—

---

पराक्रमः। जगाम भ्रातृनादाय सर्वान्मातरमेव च ॥ आ. अ. १४८ श्लो. २०] निर्वाहिता रक्षिताः। ते आख्यामि तुभ्यं कथयामि। अन्यो मत्त इति शेषः। मदन्यः क ईदृशं दुःखं कथयेत्। किं तु न कोऽपीत्यर्थः ॥२३॥

[सकलं कुरुकुलमेव कमलाकरस्तस्य दावानलः। अनेन आत्मनोऽसमीक्ष्यकारिता क्रूरता चोक्ता। न ह्यमूढचेताः कमलानि दावानले प्रक्षिपेदिति भावः] प्रियश्चासावनुजश्चेति विग्रहः। बह्वच्यनियमः इति प्रियस्यैव पूर्वनिपातः। अर्थात्सहदेवम्। अप्रतिकूलमायत्तम्। आशंसनीयं प्रत्याशार्हम्। विपत्तावमूढममुग्धम्। [अभ्युदये धृतिमन्तं क्षमावन्तम्।] आघ्राय परिचुम्ब्य।

मम हि वयसा दूरेणाल्पः श्रुतेन समो भवा-
न्सहजकृतया बुद्धया ज्येष्ठो मनीषितया गुरुः ।
शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥२४॥

अपि च । बाल्ये संवर्धितस्य नित्याभिमानिनोऽस्मत्सदृशहृदयसारस्यापि नकुलस्य ममाज्ञया वचने स्थातव्यम् । तदुच्यतां नकुलः नानुपन्तव्यास्मत्पदवी । त्वया हि वत्स,

विस्मृत्यास्मान्श्रुतिविशदया प्रज्ञया सानुजेन
पिण्डान्पाण्डोरुदकपृषतानश्रुगर्भान्प्रदातुम् ।
दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥२५॥

गच्छ जयंधर, अस्मच्छरीरस्पृष्टिकया शापितेन भवताऽकालहीनमिदमवश्यमावेदनीयम् ।

द्रौपदी—हला बुद्धिमतिके, भण मम वचनेन प्रियसखीं सुभद्राम्—'अद्य वत्साया उत्तरायाश्चतुर्थो मासः प्रतिपन्नस्य गर्भस्य । त्वमेतं कुलप्रतिष्ठापकं सावधानं रक्ष । कदापीतः परलोकगतस्य श्वसुरकुलस्यास्माकमपि सलिलबिन्दुदो भविष्यति इति ।

[हला बुद्धिमदिए, भणाहि मह वअणेण पिअसहीं सुभद्दाम्—अज्ज वच्छाए उत्तराए चउत्थो मासो पडिवण्णस्स गब्भस्स । तुमं एव्व कुलपडिट्ठावअ सावहाणं रक्ख । कदा वि इदो परलोअगदस्स ससुरउलस्स अह्माणं वि सलिलबिन्दुदो भविस्सदि त्ति ।]

युधिष्ठिरः—(सास्रम्) भोः कष्टम् ।

---

ममेति । दूरेणाधिकेन अल्पः कनिष्ठः । श्रुतेनाध्ययनेन । सहजा स्वाभाविको [कृता संस्कारेण वर्धिता । ०कृपयेति पाठे कृपा दया यस्यां तया धीरो मनीषीः ज्ञ प्राज्ञः इत्यमरः । अतः मुकुलौ पाणी कृत्वाऽञ्जलिं बद्ध्वा

आप मुझसे अवस्था में बहुत छोटे, ज्ञान में बराबर, सहज और अर्जित बुद्धि में बड़े और विद्वत्ता में गुरु हैं। इसलिये मैं सिर पर दोनों हाथों को मुकुल बनाकर (=दोनों हाथ जोड़कर) आपसे याचना करता हूँ कि आप मेरे प्रति स्नेह कम कर दें और पिता को जल देने वाले होवें ॥२४॥

और भी, मेरी आज्ञा से, बाल्यावस्था में पाले गये, सर्वदा अभिमान करने वाले और हमारे समान हृदय के सार वाले भी नकुल के वचन का पालन करना। इसलिये नकुल से कहना—वह हमारे पथ का अनुगमन न करे। हे वत्स आपको—

अनुज सहित ज्ञान से निर्मल बुद्धि द्वारा हमें भुलाकर पाण्डु को पिण्ड और अश्रु-मिश्रित जल-बिन्दु देने के लिये सम्बन्धियों के भवन में अथवा यादवों के कुल में अथवा वन में वास करके (अपने) शरीर की रक्षा करनी है ॥२५॥

जयन्धर, जाओ। हमारे शरीर को छूकर सौगन्ध लिये हुए आप अविलम्ब अवश्य ही कह देवें।

**द्रौपदी**—सखी बुद्धिमतिका मेरी ओर से प्रिय सखी सुभद्रा से कहो—'आज बेटी उत्तरा को गर्भ धारण किये चौथा मास है। तू ही इस कुल के प्रतिष्ठापक की सावधानी में रक्षा करना। शायद (वही) यहाँ से परलोक गये श्वसुर-कुल को और हमें जलाञ्जलि देने वाला होगा।'

**युधिष्ठिर**—(आँसुओं के साथ) ओह ! (बड़ा) कष्ट है।

---

**भवन्तमर्थय** इदं याचे। मयि स्नेहो **विरलतां** कृशत्वं नेयः। अस्मदर्थे प्राणान्मा त्यजेत्यर्थः। **वारिदः** निवापोदकस्य दाता ॥२४॥

**विस्मृत्येति**। सानुजेन त्वयाऽस्मान्प्रज्ञया विस्मृत्य पाण्डोरुदकपृषतान्प्रदातुं शरीरं रक्षणीयमित्यन्वयः। पृषन्ति **बिन्दुपृषताः** पुमांसः। इत्यमरः। श्रुतिरध्ययनम्, वसतिर्वासः ॥२५॥

[**स्पृष्टिका** स्पर्शः।] **शापितेन** मदङ्गशपथवता। **अकालहीनं** कालः योग्यसमयस्तेन हीनं यथा न भवेत्तथा। कदाप्येतेनापि परलोकगतस्यास्माकं श्वशुरकुलस्योदकबिन्दुर्भविष्यति। **अत्रापन्नसत्त्वा** गर्भवती। **नाभिकुलं** पितृकुलम्। [**निक्षिपसि** निधापयिष्यसि। **अत्रस्थस्य** विनाशसम्भवात्।]

शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूलपर्यन्तबन्धे ।
दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनोऽयम् ॥२६॥

साधु । इदानीमध्यवसितं करणीयम् । (कञ्चुकिनमवलोक्य) आर्य जयन्धर, स्वशरीरेण शापितोऽसि तथापि न गम्यते ।

कञ्चुकी—(साक्रन्दम्) हा देव पाण्डो, तव सुत नामजातशत्रुभीमार्जुननकुलसहदेवानामयं दारुणः परिणामः । हा देवि कुन्ति, भोजराजभवनपताके,

भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-
स्तस्यैवाखिलधार्तराष्ट्रनलिनीव्यालोलने दन्तिनः ।
आचार्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा
दग्धं त्वत्सुतकाननं ननु मही यस्याश्रयाच्छीतला ॥२७॥

(इति रुदन्निष्क्रान्तः)

युधिष्ठिरः—जयन्धर, जयन्धर ।

(प्रविश्य)

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिरः—वक्तव्यमिति ब्रवीमि । न पुनरेतावन्ति भागधेयानि नः । यदि कदाचिद्विजयी स्याद्वत्सोऽर्जुनस्तद्वक्तव्योऽस्मद्वचनाद्भवता,

---

शाखेति । रोधोऽवरोधः । आधिक्यमिति यावत् [शाखारोधेन निरन्तरप्ररूढशाखाविस्तारेण स्थगितमाच्छादितं वसुधामण्डलं येन तस्मिन् । मण्डिता अलंकृता आशा दिशो येन । पीनः स्कन्धः प्रकाण्डः यस्य तस्मिन् । सुसदृशः तयोरनुरूपः महामूलस्य पर्यन्तः परितो बन्धो यस्य तस्मिन् । ईदृशि सुमहति तरौ दग्धे सति तस्य सूक्ष्माङ्कुरे अस्मिन् । छायया अर्थी छायामिच्छन्नित्यर्थः । अयं जनः कमपि दुष्पूरमित्यर्थः । आशाबन्धं दैवात् कुरुते ।] आशाबन्धः समाश्वासे तथा मर्कटजालके । इति विश्वः । छाययार्थी छायाप्रार्थकः ।

छाया की कामना करने वाला यह जन (द्रौपदी) शाखाओं के विस्तार से पृथ्वी मण्डल को आच्छादित करने वाले, दिशाओं को भूषित करने वाले, मोटे तने वाले और सुयोग्य बड़ी जड़ के चारों और बंधान (चबूतरे) वाले; विशाल वृक्ष के भाग्य से जल जाने पर उसके इस सूक्ष्म अङ्कुर पर विचित्र आशा बाँध रहा है ॥२६॥

ठीक है ! अब निश्चित कर्त्तव्य करना चाहिये (कञ्चुकी को देखकर) आर्य जयन्धर, शरीर की सौगन्ध दिलाई है, फिर भी नहीं जा रहे हो।

**कञ्चुकी**—(विलाप करते हुए) हाय महाराज पाण्डु, तुम्हारे पुत्र युधिष्ठिर, भीम, अर्जुन, नकुल और सहदेव का यह क्रूर अन्त ! हाय भोजराज के भवन की पताका देवी कुन्ती,

तेरे भाई के पुत्र, कृष्ण के बड़े, गाण्डीवधारी के साले और सम्पूर्ण धृतराष्ट्र के पुत्र रूपी कमलिनी के दलन में गज-रूप उस वृकोदर के ही आचार्य, हल-धारी (बलराम) ने पागल अथवा मद-मत्त होकर तेरे पुत्ररूपी बन को, यह पृथ्वी जिसके अवलम्बन से शीतल थी, जला दिया है ॥२७॥

(इस प्रकार रोता हुआ बाहर चला गया)

**युधिष्ठिर**—जयन्धर, जयन्धर।

(प्रवेश करके)

**कञ्चुकी**—महाराज आज्ञा दें।

**युधिष्ठिर**—कहना चाहिये, इसलिये कह रहा हूँ। हमारे ऐसे भाग्य तो नहीं है। यदि कहीं वत्स अर्जुन विजयी हो जाय तो आप हमारी ओर से (उसे यह) कहें—

---

[तद्वत्पाण्डुवंशाङ्कुरेऽस्मिन् सलिलबिन्द्वादिलाभाशेत्यर्थः।] ॥१६॥

**भ्रातुरिति** । ते भ्रातुर्वसुदेवस्य शौरिगुरुणा [शौरेः कृष्णस्य गुरुणा ज्यायसा भ्रात्रा। अर्जुनस्य श्यालेन सुभद्राया भ्रातृत्वात्। अखिलाधार्तराष्ट्रा एव नलिन्यः कमलिन्यः तासां] व्यालोलनं व्याघट्टना। तत्र दन्तिनः। तस्य भीमस्य आचार्येण गुरुणा। हलिना बलेनाथ च हलवाहकेन। [उन्मत्तेन उन्मादवता अथवा मत्तेन। क्षीवेण। ननु यस्याश्रयादाश्रयं प्राप्य मही शीतला शान्तिमती आसीत्तत् त्वत्सुतकाननं दग्धम् ॥२७॥

हली हेतुः सत्यं भवति मम वत्सस्य निधने
तथाप्येष भ्राता सहजसुहृदस्ते मधुरिपोः ।
अतः क्रोधः कार्यो न खलु यदि च प्राणिषि ततो
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्रपदवीम् ॥२८॥

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रान्तः)

युधिष्ठिरः—(अग्निं दृष्ट्वा सहर्षम्) कृष्णे, ननूद्धतशिखाहस्ताहूतास्मद्विधव्यसनिजनः समिद्धो भगवान्हुताशनस्तत्रेन्धनीकरोम्यात्मानम् ।

द्रौपदी—प्रसीदतु प्रसीदतु महाराजो ममानेनपश्चिमेन प्रणयेन । अहं तावदग्रतः प्रविशामि । [पसीदहु पसीदहु महाराओ मम इमिणा अपच्छिमेण पणएण । अहं दाव अग्गदो पविसम्मि ।]

युधिष्ठिरः—यद्येवं सहितावेवाभ्युदयमुपभोक्ष्यावहे ।

चेटी—हा भगवन्तो लोकपालाः, परित्रायध्वं । एष खलु सोमवंशराजर्षी राजसूयसंतर्पितहव्यवाह; खाण्डवसंतर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः । एषापि पाञ्चालराजतनया देवी यज्ञवेदिमध्यसंभवा याज्ञसेनी । द्वावपि निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवतः । तत्परित्रायध्वमार्याः, परित्रायध्वम् । कथं न कोऽपि परित्रायते । (तयोरग्रतः पतित्वा) किं व्यवसितं देव्या देवेन च ।

[हा भअवन्तो लोअवाला परित्ताअह परित्ताअह । एसो क्खु सोमवंसराएसी राअसूअसंतप्पिदहव्ववाहो खण्डवसंतप्पिहुदवहस्स किरीडिणो जेट्ठो भादा सुग्गहीदणामहेओ महाराअजुहिट्ठिरो । एसा वि पाञ्चालराअतणआ देवी जण्णवेदिमज्झसंभवा जण्णसेणी । दुवे वि णिक्करुणजलणस्स प्पवेसेण इन्धणीहोन्ति ता परित्ताअहं अज्जा परित्ताअह । कधं ण को वि परित्ताअदि । किं ववसिदं देवीए देवेण अ ।]

---

[एतावन्ति अर्जुनविजयावहानीति यावत् ।]

हलीति । हेतुः कारणम् । [तथाप्येष हली ते सुहृदः भ्राता भवती । अतस्तस्मिन् क्रोधो न कार्यः ।] प्राणिषि जीवसि । गच्छेर्नमिष्यति । क्षात्रपदवीं

(यह) सच (है) कि मेरे वत्स (भीम) की मृत्यु का कारण हलधारी (वलराम) है, फिर भी यह तुम्हारे सहज मित्र मधु-सूदन (कृष्ण) का भाई है। इसलिये (उस पर) क्रोध नहीं करना चाहिये। यदि जीवित रह जाओ तो वन को चले जाना, लेकिन कठोर क्षात्र-धर्म पर न चलना ॥२८॥

**कञ्चुकि**—महाराज जैसी आज्ञा दें (बाहर चला गया)।

**युधिष्ठिर**—(अग्नि को देखकर हर्ष के साथ) ऊपर उठी हुई ज्वाला रूपी हाथ से हम जैसे विपत्ति में पड़े हुए जनों को निमन्त्रित करने वाला भगवान् अग्निदेव प्रज्वलित हो गया है। (अव) इसमें स्वयं को ईंधन बनाता हूँ।

**द्रौपदी**—कृपा कीजिये, महाराज मेरी यह अन्तिम प्रार्थना स्वीकार कर कृपा कीजिये। मैं पहले प्रवेश करूँगी।

**युधिष्ठिर**—यदि ऐसा है, तो फिर हम दोनों साथ-साथ ही अभ्युदय का उपभोग करेंगे।

**चेटी**—हाय भगवान् लोकपालों, रक्षा करो, रक्षा करो। यह चन्द्रवंश के राजर्षि, राजसूय यज्ञ से अग्नि को तृप्त करने वाले, खाण्डव-वन से अनल को सन्तुष्ट करने वाले अर्जुन के बड़े भाई, प्रातः स्मरणीय नाम वाले, महाराज युधिष्ठिर हैं। और यह पाञ्चाल की राजकुमारी, यज्ञवेदी के बीच में उत्पन्न, महारानी द्रौपदी हैं। दोनों ही क्रूर अग्नि में प्रवेश करके (उसके) ईंधन हो रहे हैं। इसलिये, हे आर्य लोगों, वचाओ, बचाओ। कैसे? कोई भी नहीं वचा रहा हैं? (उन दोनों के आगे पड़कर) महारानी और महाराज ने क्या सोच रक्खा है?

---

क्षत्रियपथं [शत्रुहननरूपम्।] पुनर्मा गा न गमिष्यसि। मा गाः इति माङ् योगे आशंसायां लङ्। न माङ् योगे इत्यटो निषेधः ॥२८॥

[शिला एव हस्ताः शिलाहस्ताः। **उद्धता** ये शिखाहस्तास्तैः आहूतः अस्मद्विधः व्यसनिजनः येन स तथोक्तः।] अत्र पश्चिमेन प्रथमेन सत्येन वा। [नास्ति पश्चिमो यस्मात्तेन चरमेणेत्यर्थः।] **प्रणयः** प्रेम्णि याञ्चायाम्। इति धरणिः। [राजा सोमः सूयते अत्र इति राजसूयः तेन सन्तर्पितः हव्यवाहः येन सः। **सुगृहीतं** प्रातः स्मृतं नामधेयं यस्य स तथोक्तः। तदुक्तं—स सुगृहीतनामा

युधिष्ठिरः—अयि बुद्धिमतिके, यद्वत्सलेन प्रियानुजेन विना सदृशं तद् । उत्तिष्ठोत्तिष्ठ, भद्रे, उदकमुपनय ।

चेटी—यद्देव आज्ञापयति (इति निष्क्रम्य पुनः प्रविश्य च) जयतु जयतु महाराजः । [जं देवो आणवेदि । जेदु जेदु महाराओ ।]

युधिष्ठिरः—पाञ्चालि, त्वमपि तावत्स्वपक्षपातिनो वृकोदरस्य प्रियस्यानुजस्योदकक्रियां कुरु ।

द्रौपदी—महाराज एव करोतु । अहं पुनर्ज्वलनं प्रवेक्ष्यामि ।
[महाराओ एव्व करेदु । अहं उण जलणं पविसिस्सम् ।]

युधिष्ठिरः—अनतिक्रमणीयं लोकवृत्तम् । भद्रे, उदकमुपनय ।

(चेटी तथा करोति)

युधिष्ठिरः—(पादौ प्रक्षाल्योपस्पृश्य च) एष तावत्सलिलाञ्जलिर्गाङ्गेयाय भीष्माय गुरवे । अयं प्रपितामहाय शान्तनवे । अयमपि पितामहाय विचित्रवीर्याय । (सास्रम्) तातस्याधुनावसरः । अयमपि तत्रभवते सुगृहीतनाम्ने पित्रे पाण्डवे,

अद्य प्रभृति वारीदमस्मत्तो दुर्लभं पुनः ।
तात माद्रयम्बया सार्धं मया दत्तं निपीयताम् ॥२९॥

एतज्जलं जलजनीलविलोचनाय
भीमाय तस्य मम चाप्यविभक्तमस्तु ।
एकं क्षणं विरम वत्स पिपासितोऽपि
पातुं त्वया सह जवादयमागतोऽस्मि ॥३०॥

अथवा लुक्षत्रियाणां गतिमुपगतं वत्समहमुपगतोऽप्यकृती द्रष्टुम् । वत्स भीमसेन,

---

स्याद्यः प्रातः स्मर्यते बुधैः ।] खाण्डववनादीपनजननस्य किरीटीनो ··द्वावप्येतौ ...। उपस्पृश्याचम्य । गाङ्गेयाय भीष्माय । शान्तनवे शान्तनुनाम्ने ।

अद्येति । हे तात मया दत्तमेतज्जलं माद्रयम्बया सह निपीयताम् ॥२९॥

युधिष्ठिर—अरी बुद्धिमतिका, जो प्रेम करने वाले, प्रिय अनुज के बिना उचित है, वही (सोचा हुआ है)। कल्याणी उठो; जल ले आओ ।

चेटी—जो महाराज आज्ञा दें। (यह कहकर बाहर जाकर और फिर प्रवेश करके।) जय हो महाराज की जय हो।

युधिष्ठिर—पाञ्चाल-पुत्री, अब तुम भी अपने पक्षपाती भीम और प्रिय अर्जुन को जलाञ्जलि दे दो।

द्रौपदी—महाराज ही (जलाञ्जलि) दे लें। मैं तो अग्नि में प्रवेश करूँगी।

युधिष्ठिर—लोकाचार का उल्लङ्घन नहीं किया जा सकता है। हे भद्रे, जल लाओ।

(चेटी वैसा ही करती है)

युधिष्ठिर—(पैर धोकर और आचमन करके) यह जलाञ्जलि गङ्गा-पुत्र गुरु भीष्म के लिये है। यह प्रपितामह शान्तनु के लिये है और यह पितामह विचित्रवीर्य के लिये है। (आँसुओं के साथ) अब पिता का वार है। यह (जलाञ्जलि) आदरणीय प्रातःस्मरणीय पिता पाण्डु के लिये है।

आज के बाद फिर यह जल हमसे मिलना कठिन है, इसलिये, हे तात, मेरे द्वारा दिये गये (जल) को माता माद्री के साथ (मिलकर) पीजिये ॥२६॥

कमल के समान नेत्र वाले भीम के लिये (दिया हुआ) यह जल उसका और मेरा सम्मिलित रहे। हे वत्स, प्यासे होते हुए भी तुम क्षण-भर ठहरे रहो। (इसे) तुम्हारे साथ पीने के लिये मैं यह वेगपूर्वक आ रहा हूँ ॥३०॥

अथवा समीप जाने पर भी मैं यह वीर क्षत्रियों की गति को प्राप्त हुए वत्स को देखने में असमर्थ रहूँगा। वत्स भीमसेन,

---

एतदिति। [जलजं कुवलयमिव नीले विलोचने यस्य तस्मै] जलजस्य लीला विलासो यत्र तत्। भीमप्रियस्य प्रीतिविषयभीमस्य। अविभक्तं साधारणम्। हे वत्स भीम। [पिपासितः संजाततृष्णाऽपि एकं क्षणं] चिरम मां प्रतिपालय। अयमहं एतज्जलं त्वया सह पातुं जवाद्वेगदागतोऽस्मि। [वर्तमानसामीप्ये भविष्यति लट्] ॥३०॥

गतिं स्वर्गम्। [अकृती असमर्थः।]

मया पीतं पीतं तदनु भवताम्बास्तनयुगं
मदुच्छिष्टैर्वृत्तिं जनयसि रसैर्वत्सलतया ।
वितानेष्वप्येवं तव मम च सोमे विधिरभू-
न्निवापाम्भः पूर्वं पिबसि कथमेवं त्वमधुना ॥३१॥

कृष्णे, त्वमपि देहि सलिलाञ्जलिम् ।

द्रौपदी—हञ्जे बुद्धिमतिके, उपनय मे सलिलम् ।
[हञ्जे बुद्धिमदिए उवणेहि मे सलिलम्]

(चेटी तथा करोति)

द्रौपदी—(उपसृत्य जलाञ्जलिं पूरयित्वा) महाराज, कस्मै सलिलं ददामि ? [महाराअ कस्स सलिलं देह्मि ?]

युधिष्ठिरः—
तस्मै देहि जलं कृष्णे सहसा गच्छते दिवम् ।
अम्बापि येन गान्धार्या रुदितेन सखीकृता ॥३२॥

द्रौपदी—नाथ भीमसेन, परिजनोपनीतमुदकं स्वर्गगतस्य ते पादोदकं भवतु । [णाह भीमसेण, परिअणोवणीदं उदअं सग्गगदस्स दे पादोदअं भोदु ।]

युधिष्ठिरः—फाल्गुनाग्रज,
असमाप्तप्रतिज्ञेऽस्तं याते त्वयि महाभुजे ।
मुक्तकेश्यैव दत्तस्ते प्रियया सलिलाञ्जलिः ॥३३॥

द्रौपदी—उत्तिष्ठ महाराज, दूरं गच्छति ते भ्राता ।
[उट्ठेहि महाराअ दूरं गच्छदि दे भादा ।]

---

**मयेति** । [मया अम्बास्तनयुगं लक्षणया स्तयुगजं पयः पीतं तदनु भवता पीतम् । वत्सलतया मयि स्नेहात् मदुच्छिष्टैः रसैः रसवद्भिः भोज्यविशेषैः वृत्तिं जनयसि । वितानेषु यज्ञेष्वपि सोमे सोमपाने एवं तव मम च विधिरभूत् । अधुना तु त्वं निवापाम्भः एवं पूर्वं कथं पिबसि । तदनु तत्पश्चात् । रसैर्दुग्धैः । वृत्तिं वर्तनम् । क्रतुविस्तारयोरस्त्री वितानम् । इत्यमरः सामयो विधिः समः

आपने माता के दोनों स्तनों को मेरे पी चुकने के बाद पिया था। तुम प्रेम के कारण मेरे बचे हुए रसीले भोजन से आहार करते थे। यज्ञों में भी सोम विषय में मेरा और तुम्हारा यही ढङ्ग था। (फिर) तू अब तर्पण के जल को इस प्रकार पहले क्यों पी रहा है? ॥३१॥

कृष्णा, तुम भी जलाञ्जलि दो।

**द्रौपदी**—सखी बुद्धिमतिका, मेरे पास जल लाओ।

(चेटी वैसा करती है)

**द्रौपदी**—(समीप जाकर और जलाञ्जलि भरकर) महाराज किसे जल दूँ?

**युधिष्ठिर**—

हे कृष्णा, अकस्मात् स्वर्ग को चले जाने वाले उस (भीम) को जल दो, जिसने रोदन द्वारा माताजी को भी गान्धारी की सखी बना दिया है ॥३२॥

**द्रौपदी**—नाथ भीमसेन, सेवक द्वारा लाया हुआ (यह) जल स्वर्ग में गये हुए आपके लिये चरणोदक होवे।

**युधिष्ठिर**—हे अर्जुन के बड़े भाई,

प्रतिज्ञा बिना पूर्ण किये (ही) तुझ महाबाहु के निधन को प्राप्त हो जाने पर खुले हुए केशों वाली ही तेरी प्रिया ने (तुम्हें) जलाञ्जलि दी है ॥३३॥

**द्रौपदी**—महाराज, उठिये। आपके भाई दूर चले जा रहे हैं।

---

प्रकारः। साम्य इति चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। साम्ये विधिः इति पाठे साम्ये तुल्यत्वे विधिरित्यर्थः सोमे विधिः इति पाठे सोमलताद्रवपानेऽयं प्रकार इत्यर्थः। निवापः पितृदेयम् ॥३१॥

**तस्मा इति**। सहसा शीघ्रं जलं देहीत्यन्वयः। येन [रुदितेन हेतुना अम्बापि गान्धार्याः सखी कृता। पाठान्तरे] गान्धारीरुदितेनाम्बापि सखीकृता रोदनवती कृतेत्यर्थः ॥३२॥

**फाल्गुनोऽर्जुनः**।

**असमाप्तेति**। [०प्रतिज्ञेऽपि याते इति पाठे याते दिवमिति शेषः मुक्ता अबद्धाः केशा यस्यास्तया।] ॥३३॥

युधिष्ठिरः—(दक्षिणाक्षिस्पन्दनं सूचयित्वा) पाञ्चालि, निमित्तानि मे कथयन्ति संभावयिष्यसि वृकोदरमिति ।

(नेपथ्ये कलकलः)

(प्रविश्य संभ्रान्तः)

कञ्चुकी—परित्रायतां परित्रायतां महाराजः । एष खलु दुरात्मा कौरवापसदः क्षतजाभिषेकपाटलिताम्बरशरीरः समुच्छ्रितदिग्धभीषणगदापाणिरुद्यतकालदण्ड इव कृतान्तोऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इव एवाभिवर्तते ।

युधिष्ठिरः—हा दैव, ते निर्णयो जातः । हा गाण्डीवधन्वन्,

(इति मुह्यति)

द्रौपदी—हा आर्यपुत्र, हा मम स्वयंवरस्वयंग्राहदुर्ललित, प्रियं भ्रातरमनु गतोऽसि, न पुनर्महाराजमिमं दासजनं च (इति मोहमुपगता)

[हा अज्जउत्त हा मम सअंवरसअंगाहदुल्ललिद पिअं भादुअं अणुगदोसि । ण उण महाराअं इमं दासजणं अ ।]

युधिष्ठिरः—हा वत्स सव्यसाचिन्, हा त्रिलोचनाङ्गनिष्पेषमल्ल, हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक, हा बदर्याश्रममुनिद्वितीयतापस, हा द्रोणाचार्यप्रियशिष्य, हा अस्त्रशिक्षाबलपरितोषितगाङ्गेय हा राधेयकुलकमलिनी-

---

महाराज उत्तिष्ठोत्तिष्ठ । ···मे भर्ता संभावयिष्यसि प्राप्स्यसि । [कौरवेषु अपसदः कौरवापसदः । क्षताज्जायते इति] क्षतजं रक्तं [तेन पाटलिते रक्तीकृते अम्बरशरीरे यस्य] अम्बरं वासः । [समुच्छ्रिता या दिग्धा रक्तलिप्ता भीषणा च गदा सा पाणौ यस्य ।] गदाशक्तिः शक्तिरस्त्रभेदस्तद्वद्गदेत्यर्थः । हा मम स्वयंवर स्वयंग्राहदुर्ललित भ्रातृप्रिय परलोकमनुगतोऽसि । [स्वयंवरे यः स्वयंग्राहः मया पतित्वेन वरणं स एव दुर्ललितं यस्य । मद्ग्रहणे कृतनिश्चयेत्यर्थः । अनेन मम त्यागोऽत्यन्तमनुचित इति ध्वनितम् ।]

सव्येन वामकरेण सचते दक्षिणहस्तेनेव बाणान् वर्षते असौ सव्यसाची तस्य सम्बुद्धिः] सव्यसाचिन्नर्जुन । [त्रिलोचनस्य किरातवेषधारिणः अङ्गानां

**युधिष्ठिर**—(दाहिनी आँख का फड़कना सूचित करके) पाञ्चाल-पुत्री, मेरे शकुन बतला रहे हैं कि तुम वृकोदर को प्राप्त करोगी।

**द्रौपदी**—महाराज, (आपका) शकुन सत्य होवे।

(नेपथ्य में कलकल ध्वनि होती है)

(प्रवेश करके घबराया हुआ)

**कञ्चुकी**—बचाइये, महाराज बचाइये। यह दुष्ट अधम कौरव रुधिर में स्नान से लाल वस्त्र और शरीर वाला, हाथ में उठायी हुई और रुधिर से लिप्त भीषण गदा वाला, मानो कालदण्ड उठाये यमराज आदरणीय पाञ्चाल राजकुमारी को इधर-उधर खोजता हुआ, इधर ही आ रहा है।

(यह कहकर मूच्छित हो जाता है)

**द्रौपदी**—हाय, आर्यपुत्र! मेरे स्वयंवर में स्वयं ग्रहण करने के दुराग्रही (अर्जुन), आपने (भी) प्रिय भाई का अनुगमन किया; लेकिन महाराज और इस दासजन का (विचार) नहीं किया। (यह कहकर मूच्छित हो जाती है)।

**युधिष्ठिर**—हाय वत्स अर्जुन, हाय त्रिनेत्र शङ्कर के अङ्गों का मर्दन करने वाले, मल्ल, हाय निवातकवच नामक दैत्यों का नाश करके देवलोक को निष्कण्टक करने वाले हाय बदरिकाश्रम के मुनियों (नर-नारायण) में से दूसरे तपस्वी, हाय द्रोणाचार्य के प्रिय शिष्य, हाय अस्त्र-शिक्षा के बल से गङ्गापुत्र पितामह भीष्म को सन्तुष्ट कर देने वाले, हाय राधा-पुत्र (कर्ण) के कुलरूपी

---

**निष्पेषे मर्दने मल्ल।]** **निवातेति।** वितातकवचनामकदैत्यहननेन निःशत्रूकृत-सुरलोक इत्यर्थः। [निवाचकवचा नाम दानवा मम शत्रवः। समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत। तिस्रः कोटयः समाख्यातास्तुल्यरूपबलप्रभाः। इत्यादि कथा भारते वनपर्वणि द्रष्टव्या। पृ० ६८-७१, ७३] **बदर्याश्रमो** बदरिकाश्रमः। तत्र **यौ मुनी** नरनारायणौ तयोः द्वितीयः तापसः। नारायणस्य प्रथमत्वात्। मुन्यारिनि निर्धारणे सप्तमी। [तदुक्तं महाभारते नरस्त्वं पूर्वदेहे वै नारायण-सहायवान्। बदर्यां तप्तवानुग्रं तपो वर्षायुतान बहून्॥ इति राधेलकुलमेव **कमलिनी** तस्याः **प्रालेयवर्ष** हिमपात। तस्य विनाशकेत्यर्थः। गन्धर्वाच्चित्ररथा-

प्रालेयवर्ष, हा गन्धर्वनिर्वासितदुर्योधन, हा पाण्डवकुलकमलिनीराजहंस,

तां वत्सलामनभिवाद्य विनीतमम्बां
गाढं च मामनुपगुह्य मयाप्यनुक्तः ।
एतां स्वयंवरवधूं दयितामदृष्ट्वा
दीर्घप्रवासमयि तात कथं गतोऽसि ॥३४॥

(मोहमुपगतः)

कञ्चुकी—भोः कष्टम् । एष दुरात्मा कौरवाधमो यथेष्टमिति एवाभिवर्तते । सर्वथा सम्प्रत्ययमेव कालोचितः प्रतीकारः । चितासमीपमुपनयनाम्यत्र भवतीं पाञ्चालराजतनयाम् । अहमप्येवमेवानुगच्छामि । (चेटी प्रति) भद्रे, त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वाऽवाप्नुहि । अथवा एवमवस्थिते महाराजेऽस्तमितयोर्भीमार्जुनयोः कुतोऽत्र परित्राणाशा ।

चेटी—परित्रायध्वं परित्रायध्वमार्याः [परित्ताअहं परित्ताअह अज्जा ।]

(नेपथ्ये कलकलानन्तरम्)

भो भोः समन्तपञ्चकसंचारिणः क्षतजासवमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कगृध्रजम्बुकोलूकवायसभूयिष्ठा विरलयोधपुरुषाः, कृतमस्मद्दर्शनत्रासेन । कथयत कस्मिन्नुद्देशे याज्ञसेनी संनिहितेति । कथयाम्युपलक्षणं तस्याः ।

ऊरुं करेण परिघट्टयतः सलीलं
दुर्योधनस्य पुरतोऽपहृताम्बरा या ।

---

न्निर्वासितो मोचितो दुर्योधनो येन तत्सम्बुद्धिः ।

तामिति । [अयि इति कोमलामन्त्रणे । तात वत्स तां वत्सलां स्नेहवतीमम्बां मातरं कुन्तीं विनीतं सविनयं यथा तथा अनभिवाद्य मां च गाढं यथा तथा अनुपगुह्यानालिङ्ग्य मयापि अनुक्तोऽननुमतः एतां स्वयंवरवधूं दयिताम् अदृष्ट्वा दीर्घप्रवासं कथं गतोऽसि । नैतद् युक्तमिति भावः ।] तातानुकम्प्य । ततोऽनुकम्प्ये जनके इति विश्वः ॥३४॥

[आवाप्नुहि आश्रयार्थं गच्छ ।] गृध्रादीनां भूयिष्ठः प्रचुरो निलयो गृहं येषु

कमलिनी के लिये हिम-वर्षा-स्वरूप, हाय गन्धर्वों से दुर्योधन को छुड़ाने वाले हाय पाण्डव-कुल रूपी कमलिनी के राजहंस,

हे तात, उस वत्सल माता को विनयपूर्वक प्रणाम बिना किये, मेरा गाढ आलिङ्गन न करके मेरे बिना कहे ही, और स्वयंवर में (जीती गई) इस प्रिया को बिना देखे ही लम्बे प्रवास पर कैसे चले गये ॥३४॥

(मूर्च्छित हो जाता है)

**कञ्चुकी**—आह ! कष्ट है। यह दुष्ट नीच कौरव स्वच्छन्दतापूर्वक इधर ही चलता आ रहा है। अब केवल यही समयोचित उपाय है। आदरणीय पाञ्चाल राजकुमारी को चिता के समीप ले जाता हूँ। मैं भी इसी प्रकार अनुगमन करूँगा। (चेटी का लक्ष्य करके) कल्याणी, तुम भी देवी के भाई धृष्टद्युम्न अथवा नकुल और सहदेव के पास जाओ। अथवा महाराज के ऐसी अवस्था में वर्तमान होने पर और भीम तथा अर्जुन के निधन को प्राप्त हो जाने पर (अब) यहाँ रक्षा की आशा कहाँ ?

**चेटी**—बचाओ आर्यों, बचाओ।

(नेपथ्य में कलकल ध्वनि के पश्चात्)

रुधिर रूपी आसव से मत्त यक्ष, राक्षस, पिशाच, भूत, वेताल, कङ्क, गीध, सियार, उल्लू और कौवों के बाहुल्य वाले, समन्तपञ्चक में घूमने वाले, अल्पसंख्या में बचे हुए हे वीर पुरुषों, हमें देखकर भय मत करो। बतलाओ, द्रौपदी किस जगह है ? मैं उसकी पहचान बतलाता हूँ।

हाथ से दोनों जाँघों को लीलापूर्वक पीटते हुए दुर्योधन के सामने दुःशासन ने जिसके वस्त्र उतारे थे, और केश खींचकर धम्मिल (=जूड़े) को बिगाड़ा

---

ते तथा। वायसा भूयिष्ठा येषु ते। वायसादिभिर्बहुसंख्याका इत्यर्थः] उपलक्षणं परिवाचकम्।

**ऊरू इति**। (सलीलं करेण ऊरू निजोरुयुगं) परिघट्टयतः हस्तेन परामृशतः। तथा च भारतम्-एवमुक्त्वा तु कौन्तेयमपोह्य वसनं स्वकं। अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव। द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुदर्शयत् ॥ इति ॥ दुर्योधनस्य पुरतः या दुःशासनेन अपहृतमम्बरं वस्त्रं यस्याः सा अपहृताम्बरा। या च

दुःशासणेन कचकर्षणभिन्नमौलिः

सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥३५॥

कञ्चुकी—हा देवि यज्ञवेदिसंभवे, परिभूयसे संप्रत्यनाथा कुरुकुलकलङ्केन।

युधिष्ठिरः—(सहसोत्थाय सावष्टम्भम्) पाञ्चालि, न भेतव्य, न भेतव्यम्। (ससंभ्रमम्) कः कोऽत्र भोः। सनिषङ्गं मे धनुरुपनय। दुरात्मन्दुर्योधनहतक आगच्छागच्छ। अपनयामि ते गदाकौशलसंभृतं भुजदर्पं शिलीमुखासारेण। अन्यच्च रे कुरुकुलाङ्गार,

प्रियमनुजमपश्यंस्तं जरासंधशत्रुं
कुपितहरकिरातायोधिनं तं च वत्सम्।
त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो
ननु पुनरपहर्तुं बाणवर्षैस्तवासून् ॥३६॥

(ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः)

भीमसेनः— (उद्धतं परिक्रामन्) भो भोः समन्तपञ्चकसंचारिणः सैनिकाः, कोऽयमावेगः।

नाहं रक्षो न भूतो रिपुरुधिरजलप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि।

---

कचानां कर्षणमाकर्षणं। कचः केशः शिरोरुहः। इत्यमरः। तेन।) भिन्नमौलिर्विदारितधम्मिल्ला। मौलिः किरीटे धम्मिल्ले इति विश्वः। [सा द्रौपदी पुनः क्व कस्मिन्।] प्रदेशेऽस्तीति शेषः। कथयत तामिति शेषः ॥३५॥

हा देवि अर्थसूचनरूपा धृतिकेयम्। अन्तः पटीप्रविष्टैर्यत्क्रियतेऽर्थस्य सूचनम् वृतिकार्थप्रकाशनम्। इति भरतः। इह सादननामावमर्पसंधिः। यदाह—बीजकार्योपगमनं सादनं समुदीरितम्। [सनिषङ्गं सतूणीरम्। संभृतमुपचितम्।]

प्रियमिति। कुपितः हर एव किरातः हरकिरातः। किरातरूपी हर इत्यर्थः। [तेन सहायुध्यते इति। तं वत्समर्जुनम्। प्राणितुं जीवितुम्। त्वमिवेति व्यतिरेके

था, वह द्रौपदी अब किस स्थान पर है ? (मुझे) बतलाओ ॥३५॥]

**कञ्चुकी**—हाय यज्ञवेदी से उत्पन्न देवी, अब तू अनाथ होकर कुरुकुल के कलङ्क-भूत (दुर्योधन) द्वारा अपमानित हो रही है।

**युधिष्ठिर**—(एकदम उठकर संभलते हुए) पाञ्चाल-पुत्री, डरो मत, डरो मत। (जल्दी से) अरे ! यहाँ कोई है ? तूणीर-सहित मेरा धनुष लाओ दुष्ट नीच दुर्योधन, आ, आ। मैं बाणों की वृष्टि से तेरे गदा-नैपुण्य से उत्पन्न बाहुबल के अभिमान को दूर किये देता हूँ। और भी, अरे कुरुकुल के लिये अङ्गारस्वरूप,

जरासन्ध के शत्रु उस प्रिय अनुज को और कुपित किरातरूपधारी शङ्कर से युद्ध करने वाले उस वत्स को न देखता हुआ मैं तुझ कठोर चित्त वाले के समान जीवित रहने में समर्थ नहीं हूँ, लेकिन बाण वर्षा से तेरे प्राण अपहरण करने में तो समर्थ हूँ ही ॥३६॥

(तब हाथ में गदा लिये और रुधिर से सब अङ्गों में लिप्त
भीमसेन प्रवेश करता है।)

**भीमसेन**—(अकड़कर इधर-उधर घूमते हुए) हे समन्तपञ्चक में घूमने वाले सैनिकों, यह कैसी घबराहट है ?

मैं न (कोई) राक्षस हूँ और न (कोई) भूत। मैं शत्रु के रुधिर रूपी जल में अत्यधिक डुबाये हुए अङ्गों वाला और विशाल प्रतिज्ञारूपी गहन सागर को पार कर चुका हुआ क्रोधी क्षत्रिय हूँ। युद्ध रूपी अग्नि की ज्वालाओं में जलने

---

दृष्टान्तः। यथा त्वं जीवितुं शक्तस्तथा नाहमित्यर्थः। [तवासून्बाणवर्षैः पुनरपहर्तुं ननु शक्तोऽस्मि। न चेति पाठे न च नास्मि शक्त इति योज्यम्।] नः शिरश्चालने ॥३६॥

नाहमिति। [अहं रक्षो न। भूतो न। प्रकामं रिपोः रुधिरमेव जलं तेन प्लावितं सर्वतः सिक्तमङ्गं यस्य तथोक्तः। निस्तीर्णं उरुः गुर्वी प्रतिज्ञा एव जलनिधिः तस्य गहनं दुस्तरो भागो येन। निस्तीर्णः उरुः प्रतिज्ञा एव गहनः जलनिधिर्येन इति वा।] जलनिधिगहन इत्यत्र पूर्वनिपातविधेरनित्यत्वमेव

भो भो राजन्यवीराः समराग्निशिखादग्धशेषाः कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥३७॥

कथयन्तु भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति ।

द्रौपदी—(लब्धसंज्ञा) परित्रायतां परित्रायतां महाराजः ।

[परित्ताअदु परित्ताअदु महाराओ ।]

कञ्चुकी—देवि पाण्डुस्नुषे, उत्तिष्ठोत्तिष्ठ । संप्रति झटिति चिताप्रवेश एव श्रेयान् ।

द्रौपदी—(सहसोत्थाय) कथं न संभावयाम्यद्यापि चितासमीपम् ।

[कहं ण संभावेमि अज्जवि चिदासमीवम् ।]

युधिष्ठिरः—कः कोऽत्र भोः । सनिषङ्गं धनुरुपनय । कथं न कश्चित्परिजन. । भवतु । बाहुयुद्धेनैव दुरात्मानं गाढमालिङ्ग्य ज्वलनमभिपातयामि । (परिकरं बध्नाति)

कञ्चुकी—देवि पाण्डुस्नुषे संयम्यन्तामिदानीं नयनोपरोधिनो दुःशासनावकृष्टा मूर्धजाः । अस्तमिता संप्रति प्रतीकाराशा । चितासमीपमेव द्रुततरं संभावय ।

युधिष्ठिरः—कृष्णे, न खल्वनिहते तस्मिन्दुरात्मनि दुर्योधने संहर्तव्याः केशाः ।

भीमसेनः—पाञ्चालि, न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम् । तिष्ठतु । स्वयमेवाहं संहरामि ।

[द्रौपदी भयादपसरति]

भीमसेनः—तिष्ठ, तिष्ठ । भीरु क्वाधुना गम्यते ? (इति केशेषु ग्रहीतुमिच्छति)

युधिष्ठिरः—(वेगाद्भीममालिङ्ग्य) दुरात्मन्, भीमार्जुनशत्रो, सुयोधनहतक,

आशैशवादनुदिनं जनितापराधो
मत्तो बलेन भुजयोर्हतराजपुत्रः ।

---

समाधानम् । क्रोधनः कोपशीलः क्षत्रियः अस्मि । भो भो समरमेव शिखी तस्य शिखाभिर्दग्धास्तेभ्यः शेषा अवशिष्टाः राजन्यवीराः वः अनेन त्रासेन कृतमलं

से बचे हुए हे क्षत्रिय वीरों, आप लोगों को यह नहीं चाहिये, जो (आप लोग) मरे हुए हाथियों और घोड़ों की ओट लिये बैठे हैं ॥३७॥

आप लौग बतलायें पाञ्चाल-पुत्री किस जगह है ?

**द्रौपदी**—(चेतना प्राप्त करके) रक्षा कीजिये, महाराज रक्षा कीजिये।

**कञ्चुकी**—देवी, पाण्डु की पुत्रवधू, उठिये, उठिये। अब झट से चिता में प्रविष्ट हो जाना ही अच्छा है।

**द्रौपदी**—(एकदम उठकर) अभी भी चिता के समीप कैसे नहीं जाऊँगी ?

**युधिष्ठिर**—अरे ! यहाँ कोई है ? तूणीर-सहित धनुष लाओ। कैसे ? कोई भी सेवक नहीं है ! अच्छा, बाहु-युद्ध द्वारा ही (इस) दुष्ट का गाढ आलिंगन करके आग में गिराये देता हूँ (यह कहकर कमर कसता है)।

**कञ्चुकी**— देवी पाण्डु की पुत्रवधू, आँखों को ढकने वाले दुःशासन द्वारा खींचे गये, अपने केशों को अब बाँध लो। अब प्रतिशोध की आशा नष्ट हो गई है। जल्दी से चिता के समीप ही चलो।

**युधिष्ठिर**—हे कृष्णा, उस दुर्योधन के बिना मरे केश न बाँधो।

**भीमसेन**—हे पाञ्चाल-पुत्री मेरे जीवित रहते दुःशासन द्वारा खोली गई वेणी को अपने हाथों से नहीं बाँधोगी।

(द्रौपदी भय से दूर भागती है)

**भीमसेन**—ठहर, ठहर। हे कातर, तू अब कहाँ जा रही है ? (यह कहकर केश पकड़ना चाहता है)।

**युधिष्ठिर**—(वेगपूर्वक भीम से लिपटकर) दुष्ट, भीम और अर्जुन के शत्रु, नीच सुयोधन,

हे पापी, बाल्यवस्था से ही प्रतिदिन अपराध करने वाला बल से मत्त

---

यत् हता ये करितुरगास्तैः **अन्तर्हितैः** तिरोहितैः अतः लीनैर्लयं गतैरिव युष्माभिः **आस्यते** स्थीयते। न तथा स्थातव्यमिति भावः। त्रासफलमेतत् ॥३७॥

**झटिति** सत्वरम्। **विलुलिता** विस्खलिता। **निषङ्गेन** तूणीरेण सहितम्। **परिकरः** पर्यङ्कपरिवार्ययोः इत्यमरः **न खलु** नैवेत्यर्थः।

**आशैशवादिति**। पाप आशैशवाद्बाल्यात्प्रभृति **अनुदिनं** दिने दिने **जनिताः** कृताः कारिताश्च अपराधा येन स तथा। भुजयोर्बलेन **मत्तः**। हतौ राजपुत्रौ

आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य
जीवन्प्रयासि न पदात्पदमद्य पाप ॥३८॥

भीमसेनः—अये कथमार्यः सुयोधनशङ्कया क्रोधाग्निरिदयं मामालिङ्गति ।

कञ्चुकी—(निरूप्य सहर्षम्) महाराज, वञ्च्यसे । अयं खल्वायुष्मान्भीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीराम्बरो दुर्लक्ष्यव्यक्तिः । अलमधुना संदेहेन ।

चेटी—(द्रौपदीमालिङ्ग्य) देवि, निवृत्यतां निवृत्यताम् । एष खलु पूरित प्रतिज्ञाभारो नाथस्ते वेणीसंहारं कर्तुं त्वामेवान्विष्यति ।

[देवी, णिवट्टीअदु णिवट्टीअदु । एसो क्खु पूरिदपडिण्णाभरो णाहो दे वेणीसंहारे कादुं तुवं एव्व अण्णेसदि ।]

द्रौपदी—हञ्जे, किं मामलीकवचनैराश्वासयसि ।

[हञ्जे किं मं अलीअवअणेहिं आसासेसि ।]

युधिष्ठिरः—जयंधर, किं कथयसि नायमनुजद्वेषी दुर्योधनहतकः ।

भीमसेनः—देव अजातशत्रो, भीमार्जुनगुरो, कुतोऽद्यापि दुर्योधनहतकः । यामि हि तस्य दुरात्मनः पाण्डुकुलपरिभाविनः—

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषण्णा चतुरुदधिपयः सीमया सार्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद् ब्रवीमि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥३९॥

---

भीमार्जुनौ येन स तथा । त्वमद्य मे भुजौ एव पञ्जरं तस्य अन्तरमासाद्य जीवन् पदात्पदमपि न प्रयासि ।] [पाठान्तरे] संकटं मध्यम् । त्वं जीवन्सन्पदात्पदमप्यवश्यं न प्रयास्यसि वर्तमानसामीप्ये वर्तमानवद्वा इति भविष्यति लट् । यद्वा । तत्कालीनक्रियायां वर्तमानत्वाद्वर्तमाने लट् ॥३८॥

[सुयोधनस्य क्षतजेन अरुणीकृतं रक्तीकृतं सकलं शरीरं अम्बरं च यस्य स तथोक्तः । दुर्लक्षा दुर्ज्ञेया व्यक्तिः स्पष्टाकारो यस्य स तथा ।] वेणीसंहारं वेणीबन्धनम् । अलीकवचनैः [मिथ्याभाषणैः ।] परिभवतीति पाण्डुकुलपरिभावी तस्य ।

भूमादिति [मया तस्य शरीरं भूमौ क्षिप्तम् । इदं तस्य असृक् चन्दनेन

हुआ तू, जिसने राजकुमारों (भीम और अर्जुन) को मारा है, आज मेरे बाहु-रूपी पञ्जर के मध्य में आकर एक पग से (दूसरा) पग जीवित न जा सकेगा ॥३८॥

**भीमसेन**—अरे कैसे ? आर्य दुर्योधन के भ्रम से क्रोध के कारण निर्दयता से मेरा आलिंगन कर रहे हैं।

**कञ्चुकी**—(ध्यान से देखकर हर्ष के साथ) महाराज, आप धोखा खा रहे हैं। यह तो आयुष्मान् भीमसेन हैं, जिनका सम्पूर्ण शरीर और वस्त्र सुयोधन के रुधिर से लाल हो गये हैं, (और इसलिये) जिनको पहचानना कठिन हो रहा है। (अब कोई) शङ्का नहीं करनी चाहिये।

**चेटी**—(द्रौपदी का आलिंगन करके) हे देवी, लौट आओ, लौट आओ। यह आपका स्वामी, जिसने प्रतिज्ञा के भार को पूरा कर लिया है, आपकी वेणी बाँधने के लिये आपको ही ढूँढ रहा है।

**द्रौपदी**—सखी, क्यों झूठे वचनों से मुझे आश्वासन दे रही हो ?

**युधिष्ठिर**—जयन्धर, क्या कह रहे हो कि यह मेरे छोटे भाई का शत्रु नीच दुर्योधन नहीं है।

**भीमसेन**—महाराज अजातशत्रु, भीम तथा अर्जुन के बड़े भाई, अब नीच दुर्योधन कहाँ से (आया) मैंने पाण्डु के कुल का अपमान करने वाले उस दुष्टात्मा के—

शरीर को पृथ्वी पर फेंक दिया है और अपने शरीर पर (उसका) यह चन्दन सदृश रुधिर लगाया है। आर्य मैं पृथ्वी के साथ, चारों समुद्रों का जल जिसकी सीमायें हैं, लक्ष्मी स्थित हो गयी है; सेवक, मित्र और योद्धा—यह सम्पूर्ण कुरुकुल युद्धाग्नि में जल गया है। हे पृथ्वीपति, धृतराष्ट्र के पुत्र का वह एक नाम ही शेष रह गया है, जिसे आप कह रहे हैं ॥३९॥

---

सदृशं यथा तथा चन्दनाभं निजाङ्गे निहितम्। चतुर्णामुधीनां पयांस्येव सीमानो यस्याः सा तथोक्तया। उर्व्या भूम्या सह श्रीः आर्ये त्वयि निषण्णा स्थिता। भृत्याः कुरूणामिति शेषः। [मित्राणि योधाः अखिलं कुरुकुलं च इत्येतद्रणाग्नौ दग्धम्। हे क्षितिप यद् नाम ब्रवीषि तदेकमधुना धार्तराष्ट्रस्य दुर्योधनस्य। शेष-मवशिष्टम्।] शेषशब्दोऽयं कर्मण्यजन्तो वाच्यलिङ्ग इत्यवधेयम् ॥३९॥

युधिष्ठिरः—(स्वैरं मुक्त्वा भीममवलोक्याश्रूणि प्रमार्जयति)

भीमसेनः—(पादयोः पतित्वा) जयत्वार्यः ।

युधिष्ठिरः—वत्स, बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । तत्कथय कच्चिज्जीवति भवान्समं किरीटिना ।

भीमसेनः—निहतसकलरिपुपक्षे त्वयि नराधिपे, जीवति भीमोऽर्जुनश्च ।

युधिष्ठिरः—(पुनर्गाढमालिङ्ग्य)

रिपोरास्तां तावन्निधनमिदमाख्याहि शतशः
प्रियो भ्राता सत्यं त्वमसि मम योऽसौ बकरिपुः ।

भीमसेनः—आर्य, स एवाहम् । तन्मुञ्चतु मामार्यः क्षणमेकम् ।

युधिष्ठिरः—किमपरमशिष्टम् ।

जरासंधस्योरःसरसि रुधिरासारसलिले
तटाघातक्रीडाललितमकरः संयति भवान् ॥४०॥

भीमसेनः—आर्य सुमहदवशिष्टम् । संयच्छामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् ।

युधिष्ठिरः—सत्वरं गच्छतु भवान् अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम् ।

भीमसेनः—(द्रौपदीमुपसृत्य) देवि पाञ्चालराजतनये, दिष्ट्या वर्धसे रिपुकुलक्षयेण । अलमलमेवंविधं मामालोक्य त्रासेन ।

कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन

---

रिपोरिति । रिपोर्निधनं तावदास्ताम् । शत्रुनाशं न पृच्छामीत्यर्थः । इदं शतशः शतं वारानाख्याहि कथय । सरसि जलधाविति व्यस्तरूपकम् । तटाघातो जलधितटहननम् । मकरो जलजन्तुभेदः क्रीडाललितमकरोत् इति पाठे यः क्रीडाललितं क्रीडारूपं विलासं चकारेत्यर्थः ॥४०॥

कृष्टेति—[येन नृपशुना तेन प्रसिद्धेन दुःशासनेन राज्ञां सदसि कृष्टासि

**युधिष्ठिर**—(धीरे से छोड़कर भीम को देखता हुआ आँसू पोंछता है)।

**भीमसेन**—(पैरों पर गिरकर) आर्य की जय हो।

**युधिष्ठिर**—वत्स, आँसुओं से नेत्रों के आच्छन्न होने के कारण मैं तुम्हारे मुखरूपी चन्द्रमा को देख नहीं पा रहा हूँ। इसलिए बतलाओ, आप अर्जुन सहित जीवित तो हैं ?

**भीमसेन**—आप राजा के सम्पूर्ण शत्रुपक्ष को नष्ट कर देने पर भीम और अर्जुन जीवित हैं।

**युधिष्ठिर**—(फिर गाढ़ आलिङ्गन करके)।

शत्रु के नाश की बात रहने दो। मुझे सैकड़ों बार (=बार-बार) यह बतलाओ कि क्या तुम सचमुच ही मेरे वह प्रिय भाई हो, जो बक का शत्रु है?

**भीमसेन**—आर्य, मैं वही हूँ।

**युधिष्ठिर**—

(क्या) आप युद्ध में रुधिर-वर्षा रूपी जल वाले, जरासन्ध के वक्षःस्थल रूपी तालाब में तटाघात की क्रीड़ा करने में सुन्दर (प्रतीत होने वाले) मकर हैं ? ॥४७॥

**भीमसेन**—आर्य, मैं वही हूँ। इसलिए आर्य मुझे क्षणभर के लिए छोड़ दें।

**युधिष्ठिर**—और क्या शेष रह गया है ?

**भीमसेन**—आर्य, बहुत बड़ा (कार्य) शेष रह गया है। अब सुयोधन के रुधिर से भीगे हुए इस हाथ से पाञ्चाली के दुःशासन द्वारा खींचे गये उत्तम केशों को बाधूंगा।

**युधिष्ठिर**—आप जल्दी से जायें (वह) बेचारी वेणी बाँधने के आनन्द का उपभोग करे।

**भीमसेन**—(द्रौपदी के समीप जाकर) हे पाञ्चाल की राजकुमारी देवी, शत्रु-कुल के नाश के लिए आपको बधाई है। इस प्रकार के मुझे देखकर भय से बस करो, बस करो।

राजाओं की सभा में जिस नर-रूप में पशु, दुःशासन ने तुझे घसीटा था,

---

तस्य मत्पीतशेषाणि मम करयोः स्थितानि स्त्यानानि असृञ्जि स्पर्श। हे कान्ते

स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते राज्ञः कुरूणामपि सरसमिदं मद्गदाचूर्णितोरो-
रङ्गेऽङ्गे सृङ्निषिक्तं तव परिभवजस्यानलस्योपशान्त्यै ॥४१॥

**बुद्धिमतिके, क्व सा संप्रति भानुमती योपहसति पाण्डवदारान् । भवति यज्ञवेदिसंभवे याज्ञसेनि ।**

द्रौपदी—आज्ञापयतु नाथः [आणवेदु णाहो ।]

भीमसेनः—**स्मरति भवती यन्मयोक्तम्** । (चञ्चद्भुजेत्यादि १–२१ पूर्वोक्तं पठति) ।

द्रौपदी—**नाथ, न केवलं स्मरामि । अनुभवामि च नाथस्य प्रसादेन ।**

[णाह, ण केवलं सुमरामि । अणुहवामि अ णाहस्स प्पसादेण ।]

भीमसेनः—(वेणीमवधूय) **भवति, संयम्यतामिदानीं धार्तराष्ट्रकुलकालरात्रिर्दुःशासनविलुलितेयं वेणी ।**

द्रौपदी—**नाथ, विस्मृताऽस्म्येतं व्यापारम् । नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ।** [णाह, विसमरिदह्मि एदं वावारम् । णाहस्स प्पसादेण पुणो वि सिक्खिस्सम् ।]

भीमः—(वेणीं बध्नाति)

(नेपथ्ये)

**महासमरानलदग्धशेषाय स्वस्ति भवतु राजन्यकुलाय ।**
**क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि**
प्रत्याशं मुक्तकेशान्यतुलभुजबलैः पार्थिवान्तःपुराणि ।

---

मद्गदया चूर्णितौ ऊरू यस्य तस्य कुरूणां राज्ञोऽपि सरसं मम अङ्गे अङ्गे निषिक्तम् असृक् रक्तं तव परिभवजस्य अनलस्य उपशान्त्यै भवेत् । [निर्वहणमिह श्लोके । यदुक्तं तत्रैव-पूर्वं प्रसारितानां तु बीजादीनां समापनम् । निर्व्यूढत्वेन क्रियते तन्निर्वहणमीरितम् ॥४१॥

नाथस्य प्रसादेन पुनरनुभवामि । [अवधूय आस्फाल्य । धार्तराष्ट्रकुलस्य कालरात्रिः प्रलयकरी । विलुलिता अवकृष्टा व्यत्यस्ता च । एतं व्यापारं केश-

उसके मेरे दोनों हाथों में पीने से बचे हुए इस गाढ़े रुधिर का स्पर्श करो। हे प्रिया, तेरी अपमान से उत्पन्न वह्नि की शान्ति के लिए मेरी गदा से चूर्ण हुई जंघाओं वाले, कुरुओं के राजा का भी यह ताजा रुधिर (मेरे) अङ्ग-अङ्ग पर सींचा हुआ है ॥४१॥

हे बुद्धिमतिका, अब वह भानुमती कहाँ है, जो पाण्डवों की पत्नी का उपहास करती थी। श्रीमती यज्ञवेदी से उत्पन्न याज्ञसेनी,

**द्रौपदी**—स्वामी आज्ञा कीजिये।

**भीमसेन**—जो मैंने कहा था, वह आपको याद है। (चञ्चद्भुज···इत्यादि पूर्वोक्त श्लोक १/२१ का पाठ करता है)।

**द्रौपदी**—नाथ, केवल याद हीं नहीं है, अपितु नाथ की कृपा से (उसका) अनुभव भी कर रही हूँ।

**भीमसेन**—(वेणी को हिलाकर) श्रीमती जी, अब धृतराष्ट्र के कुल के लिए कालरात्रि-स्वरूप, दुःशासन द्वारा खोली गई, इस वेणी को बाँध लीजिये।

**द्रौपदी**—नाथ, मैं यह काम भूल गई, हूँ। स्वामी की कृपा से फिर सीखूँगी।

**भीम**—(वेणी बाँधता है)।

(नेपथ्य में)

महायुद्ध की अग्नि में जलने से बचे हुए क्षत्रियकुल का कल्याण हो।

जिसके खुलने के कारण क्रोध से अन्धे हुए, अतुल बाहुबल वाले, पाण्डु के पुत्रों ने राजाओं को नष्ट करके प्रत्येक दिशा में राजाओं के अन्तःपुरों को खुले हुए केशों वाला कर दिया है, क्रुद्ध हुए यमराज के सदृश और कुरुओं के लिये

---

बन्धनम्। नाथ विस्मृतोऽयं व्यापारो मया। सांप्रतं नाथस्य।

**क्रोधान्धैरिति**। [यस्य केशपाशस्य **मोक्षान्मोचनात्** क्रोधेनान्धैः क्रोधान्धः शता नरपतयो यैस्तैः क्षतनरपतिभिः अतुलं भुजयोः बलं येषां तैः अतुलभुजबलैः पाण्डुपुत्रैः। आशायामाशायामिति प्रत्याशं प्रतिदिशं पार्थिवान्तःपुराणि पृथिव्या ईश्वराः पार्थिवा नृपास्तेषामन्तःपुराणि लक्षणया तत्रस्थाः स्त्रियः। मुक्ताः केशा येषां तानि मुक्तकेशानि कृतानि। भर्तृविनाशाद्वैधव्यप्रापणादिति भावः।

कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
सोऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः ॥४२॥

युधिष्ठिरः—देवि, एष ते वेणीसंहारोऽभिनन्द्यते नभस्तलसंचारिणा सिद्धजनेन ।

(ततः प्रविशतः कृष्णार्जुनौ)

कृष्णः—(युधिष्ठिरमुपगम्य) विजयतां निहतशकलारातिमण्डलः सानुजः पाण्डवकुलचन्द्रमा महाराजो युधिष्ठिरः ।

अर्जुनः—जयत्वार्यः ।

युधिष्ठिरः—(विलोक्य) अये भगवान्पुण्डरीकाक्षो वत्सश्च किरीटी । भगवन्, अभिवादये (किरीटिनं प्रति) एह्येहि वत्स ।

(अर्जुनः प्रणमति)

युधिष्ठिरः—(वासुदेवं प्रति) देव, कुतस्तस्य विजयादन्यद्यस्य भगवान्पुराणपुरुषो नारायणः स्वयं मङ्गलान्याशास्ते ।

कृतगुरुमहदादिक्षोभसंभूतमूर्तिं
गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।
अजममरमचिन्त्यं चिन्तयित्वाऽपि न त्वां
भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ॥४३॥

---

सः अयं कुपितस्य यमस्य सखा कुपितयमसखः । राजाहःसखिभ्यष्टच् । कुरूणां धूमकेतुः नाशहेतुत्वात् । कृष्णायाः केशपाशः केशकलापः । बद्धः । प्रजानां निधनं संग्रामे इति शेषः । विरमतु । राज्ञां कुलेभ्यः स्वस्ति भूयात् । अत्र पूर्वार्धे काव्यलिङ्गमलङ्कारः । उत्तरार्धे उपमा रूपकं चेत्येतयोः संसृष्टिः ।] पार्थिवोऽत्र दुर्योधनः । तथा च दुर्योधने हते तदन्तःपुरनार्यः अनिबद्धकेशाः कृता इति भावः । [पाठान्तरे] दिष्ट्येति आनन्दहेतुः ॥४२॥

[सिद्धा देवयोनिविशेषाः ।] पुण्डरीकाक्षः कृष्णः । आशास्ते स्वीकरोति ।

कृतेत्यादि । हे देव जगति त्वां चिन्तयित्वाऽपि जनो दुःखी न भवति । किं पुनर्दृष्ट्वा दुःखी भवति । अपि तु न भवतीति भावः । कीदृशम् । कृता गुरोः स्थूलद्रव्यस्य महदादेर्महत्तत्त्वबुद्धितत्त्वादेः पर्वतादेर्वा क्षोभेन परिणामेन संभूता व्यापिका मूर्तिस्त्रिनयनत्वादिरूपा येन तम् । यद्वा कृतो गुरुः पर्वतादिर्येन स

(उत्पात-सूचक) धूमकेतु स्वरूप, कृष्णा का वह यह केशपाश बंध गया है। प्रजाओं का नाश बन्द हो जाये। राजाओं के कुलों का कल्याण हो ॥४२॥

**युधिष्ठिर**—हे देवी, आकाश-तल में विचरण करने वाले सिद्ध लोग तुम्हारे वेणी-बन्धन का अभिनन्दन कर रहे हैं।

(तत्पश्चात् कृष्ण और अर्जुन प्रवेश करते हैं)

**कृष्ण**—(युधिष्ठिर के समीप जाकर) सम्पूर्ण शत्रु समूह को नष्ट कर देने वाले, पाण्डव-कुल में चन्द्रतुल्य, महाराज युधिष्ठिर अनुजों सहित विजय पायें।

**अर्जुन**—आर्य की जय हो।

**युधिष्ठिर**—अरे! भगवान विष्णु (=कमल तुल्य नेत्रों वाला) और वत्स अर्जुन! भगवन् मैं प्रणाम करता हूँ, (अर्जुन को लक्ष्य करके) वत्स, आओ, आओ।

(अर्जुन प्रणाम करता है)

**युधिष्ठिर**—(वासुदेव को लक्ष्य करके) भगवन् जिसके लिए स्वयं पुरातन पुरुष भगवान् नारायण मङ्गल की कामना करें, उसकी जय से अतिरिक्त अन्य कैसे हो सकती है?

हे देव, किये गये महत्तत्त्व आदि के महान् क्षोभ से उत्पन्न मूर्त्ति वाले, प्रजाओं की उत्पत्ति, विनाश और स्थिति के कारणभूत, सगुण, अजन्मा, अमर और अचिन्त्य आप (देव) का चिन्तन करके भी संसार में (कोई प्राणी) दुःखी नहीं रहता है, फिर देखकर तो क्या? ॥४३॥

---

तथा। महदादेराकाशादेः क्षोभेन मिलनेन महाभूतसमाधिना संभूता कृतास्मदादेमूर्तिः शरीरं येन स तथा। पश्चाद्विशेषणसमासः। यद्वा। कृतं गुरुकार्यं द्रव्यं येन तादृशेन महदादिना कालाकाशादिना संभूता मिलिता मूर्त्तिर्यस्य तम्। सामान्यकारणेन सह भगवान्वेदादिकर्तेति भावः। अत एव गुणिन वेदादिसृष्टियोग्यप्रयत्नादिमन्तम्। यद्वा। गुणाः सत्त्वरजस्तमोरूपास्तद्योगिनं लोकसृष्टनाशस्थैर्यकारणं च। तथा च सत्त्वरजस्तमोरूपं गुणत्रयं सहकारि समासाद्य हरिहरहिरण्यगर्भैरवतारैरयं भगवान्कार्यत्रयकर्तेति भावः। [स्थानं स्थितिः] अजमजन्यम्। अमरमताशयम्। [अजरमिति पाठे जराहितमविकारमित्यर्थः।] अचिन्त्यं वाङ्मनसागोचरम् तदुक्तम्—यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इति। अथ च विरोधाभासः। यो हि संभूतमूर्तिः स कथमजः। यो ह्यचिन्त्यस्तस्य कथं चिन्तेति। अविरोधस्तु दर्शित एव ॥४३॥

(अर्जुनमालिङ्ग्य) वत्स, परिष्वजस्व माम् ।

कृष्णः—महाराज युधिष्ठिर,

व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो
धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः ।
प्राप्ता मागधमत्स्ययादवकुलै राज्ञाविधेयैः समं
स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते ॥४४॥

अहं पुनर्दुरात्मना चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरिततरमायातः ।

युधिष्ठिरः—कथं चार्वाकेण रक्षसा वयमेवं विप्रलब्धाः ।

भीमसेनः—(सरोपम्) क्वासौ धार्तराष्ट्रसखा पुण्यजनापसदो येनार्यस्य महांश्चित्तविभ्रमः कृतः ।

कृष्णः—निगृहीतः स दुरात्मा नकुलेन । तत्कथय महाराज, किमस्मात्परं समीहितं संपादयामि ।

युधिष्ठिरः—एवं पुण्डरीकाक्ष, न किंचिन्न ददाति भगवान्प्रसन्नः । अहं तु पुरुषसाधारण्या बुद्ध्या संतुष्यामि । न खल्वतः परमभ्यर्थयितुं क्षमः । पश्यतु देव,

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोपजनितस्तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे

---

व्यासोऽयमिति । [अयं भगवान् व्यासः । अमी च वाल्मीकिरामादयः मुनयः । रामः परशुरामः । माद्रीसुताभ्यामधिष्ठिताः धृष्टद्युम्नमुखाः धृष्टद्युम्नो मुखमाद्यो येषां ते तथा । आज्ञाविधेयैः मागधमत्स्ययादवकुलैः समं सह । स्कन्धेन उत्तम्भिता उत्तोलिताः तीर्थवारि जाह्नवीप्रभृतिजलं तस्य कलशा यैस्ते तथोक्ताः ते तव राज्याभिषेकाय प्राप्ता उपस्थिताः सन्तीति शेषः] [पाठान्तरे] जावालिनामा मुनिः ॥४४॥

[पुण्यजनेषु राक्षसेषु अपसदो नीचः ।] इहोच्यतां किमन्यदित्यनेन काव्य-

(अर्जुन का आलिङ्गन करके) वत्स, मेरा आलिङ्गन करो।

**कृष्ण**—महाराज युधिष्ठिर,

यह भगवान् व्यास, ये वाल्मीकि तथा परशुराम आदि मुनि और माद्री के पुत्रों से अधिष्ठित धृतद्युम्न आदि सेनापति आज्ञाकारी मागध, मत्स्य और यादव कुलों के साथ तेरे राज्याभिषेक के लिये कन्धों पर तीर्थों के जलों से भरे कलश उठाये हुए आ रहे हैं ॥४४॥

लेकिन मैं आपको दुष्ट चार्वाक द्वारा व्याकुलित किया हुआ जानकर अर्जुन के साथ जल्दी चला आया हूँ।

**युधिष्ठिर**—कैसे ? चार्वाक राक्षस ने हमें इस प्रकार धोखा दिया।

**भीमसेन**—(रोषपूर्वक) कहाँ है वह दुर्योधन का मित्र नीच राक्षस जिसने आर्य को महान् बुद्धि-व्यामोह उत्पन्न कर दिया था।

**कृष्ण**—उस दुष्ट को नकुल ने पकड़ लिया है। महाराज, इससे आगे (आपका) और क्या अभीष्ट करूँ ?

**युधिष्ठिर**—पुण्डरीकाक्ष, भगवान् प्रसन्न होकर क्या कुछ नहीं देते हैं ? मैं तो सामान्य पुरुषों की बुद्धि से ही सन्तुष्ट हूँ। इससे अधिक माँगने का सामर्थ्य मुझ में नहीं है। भगवान् देखिये—

क्रोध से अन्धे हुए (हम पाण्डवों) ने सम्पूर्ण शत्रुकुल को मार डाला, लेकिन वह हम पाँचों अक्षत रहे। पाञ्चाल की राजपुत्री ने मेरी दुर्नीति से उत्पन्न अपमान के सागर को पार कर लिया। आप भगवान् पुरुषोत्तम मुझ पुण्यशाली से आदरयुक्त होकर बातें कर रहे हैं। इससे अधिक और क्या है,

---

संहाररूपनिर्वहणसंधि । यदाह—वरप्रदान--संप्राप्तिः काव्यसंहार उच्यते। किंचिन्न न ददासि। किं तु ददास्येव। द्वौ निषेधौ प्रकृतमर्थं गमयतः। [पुरुषेषु साधारणी पुरुषसाधारणी] तया।

क्रोधान्धैरिति। क्रोधान्धैरर्थात्पञ्चपाण्डवैरेव । [ते वयं] पञ्चपाण्डवा अक्षता इत्यन्वय । पाञ्चाल्य निकारसिन्धुः [परिभवसागरः] मम **दुर्नयेन** [द्यूतपरिपणनादिना] विहितस्तीर्णः। पुरुषोत्तम इति । पुरुषेभ्य उत्तम इति समासः। न तु पुरुषेषूत्तम इति । न निर्धारणे इति निषेधात् । न चानेन षष्ठीसमासनिषेधो न तु सप्तमीसमासनिषेध इति वाच्यम्। तथा सति षष्ठी-

किं त्वन्यदतः परं भगवतो याचे प्रसन्नादहम् ॥४५॥

तथापि प्रीततरश्चेद्भगवांस्तदिदमस्तु ।

अकृपणमरुक्श्रान्तं जीव्याज्जनः पुरुषायुषं
भवतु भगवन्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
त्सततसुकृती भूयाद् भूपः प्रसाधितमण्डलः ॥४६॥

अपि च,

अवनिमवनिपालाः पान्तु वृष्टिं विधत्तां
जगति जलधराली शस्यपूर्णाऽस्तु भूमिः ।
त्वयि मुरनरकारौ भक्तिरद्वैतयोगा-
द्भवतु मम सुदीर्घं हव्यमश्नन्तु देवाः ॥४७॥

कृष्णः—एवमस्तु ।

(इति निष्क्रान्ताः सर्वे)

* इति षष्ठोऽङ्कः *

समाप्तमिदं वेणीसंहारं नाम नाटकम्

---

समासस्याप्राप्तेरेव निषेधात्सर्वत्र सप्तमीसमासेनैव प्रयोगसिद्धेः । तस्मात्पञ्चमी समास एवायमित्यदोषः । सुकृतिनं पुण्यवन्तम् ॥४५॥

अकृपणमिति अकृपणं कार्पण्यरहितमरुक्श्रान्तं न रोगेण परिश्रान्तं च यथा स्यादेवं [जनः] लोकः पुरुषायुषं जीव्याज्जीवतु । पुरुषायुषमिति अचतुर-इत्यादौ साधितम् । हे भगवन् द्वैतं विनाऽद्वैतक्रमेण पुरुषोत्तमे भक्तिर्भवतु । मम

जिसे मैं प्रसन्न हुए भगवान से माँगू ।।४५।।

फिर भी यदि भगवान् बहुत ही प्रसन्न है, तो यह तो हो जाये—

हे भगवान्, प्रजायें कार्पण्य रहित तथा निरोग होकर पुरुष की आयु पर्यन्त जियें। पुरुषोत्तम में द्वैतरहित भक्ति होवे। राजा प्रजा का अनुरागी, विद्वानों का बन्धु, गुणों का विशेष ज्ञाता, सदा पुण्य कार्य करने वाला और अधीन राज्यों को वश में रखने वाला होवे ।।४६।।

और भी—

राजा लोग पृथ्वी का पालन करें; मेघापङ्क्ति भुवन में वृष्टि करे; पृथ्वी धान्य से पूर्ण हो, मेरी मुर और नरक के शत्रु आप में अद्वैत सम्बन्ध से भक्ति हो। और दीर्घकाल पर्यन्त देव लोग हवि का भोग करते रहें ।।४७।।

कृष्ण—ऐसा ही होगा।

(सब निकल जाते हैं)

*** षष्ठ अङ्क समाप्त ***

**वेणीसंहार नाम का नाटक समाप्त हुआ।**

---

जनानां चेति शेषः। पण्डितगुणेषु पण्डितजनो विहितहृदयो दत्तचित्तः सानुरागो वा भवतु। भूपः [दयितं भुवनं यस्य तथा प्रियलोकः। विदुषां बन्धुः। विशेषविद्विशिष्टगुणज्ञः] सदा पुण्यवान्प्रसाधितराजचक्रश्च भूयात् ।।४६।।

जलधराली मेघपंक्तिः जगति वृष्टिं विधत्ताम्। भूमिः शस्यैः पूर्णा धान्यादिसमृद्धिमती अस्तु। मुरनरकयोस्तन्नामकदैत्योः शत्रौ। अद्वैतयोगादनन्यमनसा भक्तिः भवतु। देवाः हव्यं होमेष हुतमाज्यादि सुदीर्घं बहुकालमश्नन्तु ।।४७।।

* इति षष्ठोऽङ्कः *

## टिप्पणकृतो जगद्धरस्य वंशादिकीर्तनम्

कतीह नाटकाम्बुधौ स्फुरन्ति वोज्ज्वला रसाः ।
मदीयबुद्धिरल्पिका क्व वेद तानशेषतः ॥१॥

नानादरं मम कृतौ नियतं तनुध्व-
मत्राधुनातनतया गुणदोषविज्ञाः
ग्राह्यं शिशोरपि सुभाषितमित्थमात्थ
यूयं ततोऽपि मम टिप्पनमाद्रियध्वम् ॥२॥

लब्धं दुर्लभशासनं सुरगणग्रामोऽभिरामो गुणै-
र्विद्यावंशविभूषणे अपि शुभे छत्रे उभे धारिते ।
येनायं समभूद् द्विजातितिलकश्चण्डेश्वरः पण्डितो
मीमांसैकरहस्यवश्यहृदयो दातावदाताशयः ॥३॥

प्रासूतासावहितनगरीनागरीगीतकीर्ति
विप्रं क्षीप्रं गुणदमधिकं वेदपूर्वं धरं तम् ।
कैवर्तानामलभत नृपाच्छासनं सोऽयमुच्चै-
रापत्पुत्रं गुणमयतनुं रामपूर्वंधरान्तम् ॥४॥

सोऽयं ध्रुवामनगरे पदमाप शुद्धे
मीमांसको विमलकीर्तिपवित्रमूर्तिः ।
पुत्रं गदाधरमवाप गुणैरगाधं
सत्तान्विकं गुणिगणप्रथिताभिमानम् ॥५॥

असूत विद्याधरमेव धीरं गुणैरनूनं सुकृताधिवासम् ।
तं रत्नपूर्वं धरमाप पुत्रं सोऽपि प्रसिद्धं गुणिनां गुणेन ॥६॥

दमयन्त्यामयं धीरो लेभे सुतमरिंदमम् ।
श्रीजगद्धरनामानमनर्घगुणशालिनम् ॥७॥

विद्याछत्रं कुलच्छत्रं धारितं येन धीमताम् ।
जगद्धरः सुरगणे सोऽयं नैयायिकः कविः ॥८॥

येनापाठि कठोरगौतममतं वैशेषिकं खण्डनं
येनाश्रावि सकोषकाव्यनिवहं तत्पाणिनीयं मतम् ।
छन्दोऽलंकरणं च शुद्धभरतं येनाध्यगायि स्थिरं
तेनानेन जगद्धरेण कविना टीका कृतेयं मुदा ॥९॥
नानालंकृतिसुन्दरो रसवती नानागुणानां निधि-
र्नानाभावविभावनैकचतुरा नानार्थसार्थाधिका ।
टीकेयं विमलाङ्गनेव रहिता दोषैरशेषैरत-
स्तामेतामधिभूषयन्तु कृतिनस्तेभ्यो नमः सर्वदा ॥१०॥
यदि भवति मदीयग्रन्थमध्ये प्रमादः
क्वचिदपि स महिम्ना शोधयनीयो महद्भिः ।
स्खलति गमनकारी प्रायशो नात्र चित्रं
भवति च गुरुहस्तालम्बनोऽपि प्रकारः ॥११॥
असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्त कृतौ व्यरंसीत्षष्ठोऽयमङ्को वरटिप्पनेऽत्र ॥१२॥

---

इति महामहोपाध्यायधर्माधिकारिक श्रीजगद्धरकृतौ
वेणीसंहारटीकायां षष्ठोऽङ्कः समाप्तः ।
॥ शुभमस्तु ॥

# वेणीसंहारस्थश्लोकानां वर्णानुक्रमसूची

# वेणीसंहारेस्थानि सुभाषितानि

## नाटक में प्रयुक्त छन्दों के लक्षण स्थल-निर्देश सहित

(१) **अनुष्टुप् (श्लोक)**—श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुः पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ आठ अक्षरों के प्रत्येक चरण में पाँचवां अक्षर लघु और छठा अक्षर गुरु होता है, सातवाँ अक्षर प्रथम तथा तृतीय चरण में गुरु और द्वितीय तथा चतुर्थ चरण में लघु होता है । अन्य अक्षरों में लघु का नियम नहीं है । उदा० १. १३, १४, १६, १७, १८, १९, २६, २. ३, ४, १३, १४, २३, ३. १७, १८, २६, २८, ३१ ।

(२) **पथ्यावक्त्र**—युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम् ।

१. ६, ३. १४, ३६, ३७, ४१, ४२, ४३, ४६, ४८, ४९, ४. ४, ७, ९, ११, १४, ५. ४, ६, १२, १५, १७, १९, २०, २३, २४, २५, २, ३१, ३४, ३९, ६. ६, १०, ११, १४, १५, २९, ३२, ३२ ।

(३) **आर्या**—यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥

मात्रिक छन्द, चरणों में क्रमशः १२, १८, १२, १५, मात्रायें । उदा० १. ४, ५, ६, २०, ५. १०, १८ ।

(४) **उपजाति**—इन्द्रवज्रा और उपेन्द्रवज्रा का मिश्रण । इन्द्रवज्रा—स्यादिन्द्रवज्रा यदि तो जगौ गः । त, त, ज, ग, ग ।

उपेन्द्रवज्रा—उपेन्द्रवज्रा जतजास्ततो गौ । ज, त, ज, ग, ग । उदा० ६. ३ ।

(५) **पुष्पिताग्रा**—अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा । अर्धसमवृत्त; विषम चरण—न, न, र, य । समचरण—न, ज, ज, र, ग । उदा० ३. ६, ४. ३ ।

(६) **पृथ्वी**—जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः । ज, स, स, य, ल, ग ! ८ वें अक्षर पर विराम । उदा० ३. ४, ३४, ६. १८ ।

(७) **प्रहर्षिणी**—त्र्याशाभिर्मनजरगाः प्रहर्षिणीम् । म, न, ज, र, ग; तीसरे अक्षर पर यति उदा० २. २८, ३. २७ ।

(८) मालिनी—ननमयययुतेयं मालिनी भोगिलोकैः। न, न, म, य, य; आठवें अक्षर पर विराम। उदा० २. १५; ३, ४०; ५. २१, २७, ४०, ६. ३६, ४३।

(९) वसन्ततिलका—उक्ता वसन्तलिका तभजा जगौ गः। त, भ, ज, ज, ग, ग। उदा० १. ७, ८, १५, २१, २. ६, ११, २२, २५, २७; ३. १०, १२, १३, १५, २१, २९, ३०, ४४, ४. ५, ६, ८, १०; ५. २, ३, १३, १६, २२, ३२, ३८ ४२; ६. ४, ९, २१, २, २३, ३०, ३४, ३५, ३८।

(१०) शार्दूलविक्रीडित—सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् म, स, ज, स, त, त, ग; बारहवें अक्षर पर विराम। उदा० १. २, १२, २४, २५; २. १, २, ८, १२, १६, १९, २४; ३. ५, ९, ३३, ३५, ४७; ४. १, १२; ५. १, ५, ७, ९, १८; ६. १, ७, १२, १३, १६, १७, १९, २७, ४४, ४५, ४८।

(११) शिखरिणी—रसैः रुद्रैश्छिन्ना यमनसभला गः शिखरिणी। य, म, न, स, भ, ल, ग; छठे अक्षर पर विराम। उदा० १. १, १०, ११; ३, १६, १९, २२, २५, ३८; ४५; ६. ५, २८, ३१, ४०।

(१२) स्रग्धरा—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् म, र, भ, न, य, य, य, सातवें और चौदहवें अक्षरों पर विराम। उदा० १. ३, २२. २७; २. १८, २१, २६; ३. ७, ३२; ४. २; ५. २६, २९, ३०, ३५; ३६, ३७, ६. २, ८, ३७, ३९, ४१, ४२।

(१३) हरिणी—नसमरसला गः षड्वेदैर्हरिणी मता। न, स, म, र, स, ल, ग; छठे और दसवें अक्षरों पर विराम। उदा० ३. २४; ५. ८, ४१, ६, २४, ४६।

(१४) द्रुतविलम्बित—द्रुतविलम्बितमाह नभौ भरौ। न, भ, भ, र। उदा० २, २०।

(१५) मन्दाक्रान्ता—मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत् म, भ, न, त, ग, ग; चौथे और दसवें अक्षरों पर विराम। उदा० १. २३, २. ७, १०, १७; ३. ८, ११, २०, २३; ४. १३, १५; ५. ३३; ६. २० २५, २६।

(१६) **मञ्जुभाषिणी**—सजसा जगौ च यदि मञ्जुभाषिणी । स, ज, स, ज, ग । उदा० ३. ३९; ५. १४ ।

(१७) **वियोगिनी या सुन्दरी**—विषमे ससजा गुरु समे सभरा लोऽथ गुरुवियोगिनी । अर्धसमवृत्त; विषम चरण—स; स, ज, ग; समचरण—स, भ, र, ल, ग । उदा० २. ५ ।

(१८) **औपच्छन्दसिक**—पर्यन्ते यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् । औपच्छन्दसिक छन्द में वियोगिनी के चरण के अन्त में एक गुरु अक्षर और जोड़ दिया जाता है । इसलिये, विषम चरण—स, स, ज ग, ग; समचरण—स, भ, र, य । उदा० २. ६ ।

---